# वैयाकरणभूषणसारः/धात्वर्थनिर्णयः (कारिका १-२१)


< वैयाकरणभूषणसारः
<मङ्गलम्>
वैयाकरणसिद्धान्तभूषणसारः

श्रीलक्ष्मीरमणं नौमि गौरीरमणरूपिणम्।
स्फोटरूपं यतः सर्वं जगदेतद् विवर्त्तते ।। 1 ।।

अशेषफलदातारं भवाब्धितरणे तरिम्।
शेषाशेषार्थलाभार्थं प्रार्थये शेषभूषणम् ।। 2।।

पाणिन्यादिमुनीन् प्रणम्य पितरं रङ्गोजिभट्टभिधं
द्वैतध्वान्तनिवारणादिफलिकां पुम्भाववाग्देवताम्।
ढुण्ढिं गौतमजैमिनीयवचनव्याख्यातृभिर्दूषितान्
सिद्धान्तानुपपत्तिभिः प्रकटये तेषां वचो दूषये ।। 3।।

नत्वा गणेशपादाब्जं गुरूनथ सरस्वतीम्।
श्रीकौण्डभट्टः कुर्वेऽहं वैयाकरणभूषणम्।।*
<ग्रन्थारम्भः>
प्रारिप्सितप्रतिबन्धकोपशमनाय कृतं श्रीफणिस्मरणरूपं मङ्गलं शिष्यशिक्षार्थं निबध्नन् चिकीर्षितं प्रतिजानीते-

फणिभाषितभाष्याब्धेः शब्दकौस्तुभ उद्धृतः।
तत्र निर्णीत एवाऽर्थः सङ्क्षेपेणेह कथ्यते ।। 1।।

उद्धृत इति। अत्र `अस्माभिः' इति शेषः। `भाष्याब्धेः शब्दकौस्तुभ उद्धृतः' इत्युक्तिस्तु शब्दकौस्तुभोक्तानामर्थानामाधुनिकोत्प्रेक्षितत्वनिरासाय। अन्यथा तन्मूलकस्याऽस्य ग्रन्थस्याप्याधुनिकोत्प्रेक्षितासारत्वापत्तौ पाणिनीयानामनुपादेयतापत्तेः।`तत्र निर्णित' इत्युक्तिरितोऽप्यधिकं जिज्ञासुभिः शब्दकौस्तुभे द्रष्टव्यमिति ध्वनयितुम् ।। 1।।
</ग्रन्थारम्भः>
<1-0>
अथ धात्वर्थनिर्णयः

<1-1>धात्वाख्यातार्थविषये वैयाकरणमतम्
प्रतिज्ञातमाह-
फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः।
फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम् ।। 2 ।।

धातुरित्यत्र स्मृत इति वचनविपरिणामेनाऽन्वयः।

<1-1-1>धात्वर्थः

फलम्=विक्लित्यादि।
व्यापारस्तु भावनाभिधा=साध्यत्वेनाऽभिधीयमाना क्रिया।
उक्तञ्च वाक्यपदीये-
`यावत् सिद्धमसिद्धं वा साध्यत्वेनाऽभिधीयते।
आश्रितक्रमरूपत्वात् सा क्रियेत्यऽभिधीयते।। इति ।।

न च साध्यत्वेनाऽभिधाने मानाभावः, `पचति, पाकः, करोति, कृतिः' इत्यादौ धात्वर्थावगमाविशेषेऽपि क्रियान्तराकाङ्क्षानाकाङ्क्षयोर्दर्शनस्यैव मानत्वात्। तथा च क्रियान्तराकाङ्क्षाऽनुत्थापकतावच्छेदकरूपं साध्यत्वम्। तद्रूपवत्त्वमसत्त्वभूतत्वम्। एतदेवाऽऽदाय
`असत्त्वभूतो भावश्च तिङ्पदैरभिधीयते।'
इति वाक्यपदीयमिति द्रष्टव्यम्।

अयञ्च व्यापारः फूत्कारत्वाधःसन्तापनत्वयत्नत्वादितत्तद्रूपेण वाच्यः, पचतीत्यादौ तत्तत्प्रकारकबोधस्याऽनुभवसिद्धत्वात्। न च नानार्थतापत्तिः, `तदादि'न्यायेन बुद्धिविशेषादेः शक्यतावच्छेदकानामनुगमकस्य सत्त्वात्। आख्याते क्रियैकत्वव्यवस्थाऽपि अवच्छेदकबुद्धिविशेषैक्यमादायैव। उक्तञ्च वाक्यपदीये-

`गुणभूतैरवयवैः समूहः क्रमजन्मनाम्।
बुद्ध्या प्रकल्पिताऽभेदः क्रियेति व्यपदिश्यते।।' इति ।
</1-1-1>

<1-1-2> तिङर्थः
धात्वर्थं निरूप्य तिङ्र्थमाह-

आश्रये त्विति-फलाश्रये, व्यापाराश्रये चेत्यर्थः। फलाश्रयः कर्म्म, व्यापाराश्रयः कर्त्ता। तत्र फलव्यापारयोर्धातुलभ्यत्वान्न तिङस्तदंशे शक्तिः, अन्यलभ्यत्वात्। शक्ततावच्छेदकं चाश्रयत्वं तत्तच्छक्तिविशेषरूपमिति सुबर्थनिर्णये वक्ष्यते।

<1-1-2-1>कर्तृकर्मणोः आख्यातार्थत्वे प्रमाणम्

नन्वनयोराख्यातार्थत्वे किं मानम्। प्रतीते र्लक्षणया आक्षेपात् प्रथमान्तपदाद्वा सम्भवादिति चेत्-

अत्रोच्यते-`लः कर्म्मणि च भावे चाऽकर्म्मकेभ्यः'(पा० सू० 3-4-69) इति सूत्रमेव मानम्। अत्र हि चकारात् 'कर्त्तरि कृत्'(पा० सू० 3-4-68) इति सूत्रोक्तं कर्त्तरीत्यनुकृष्यते। बोधकतारूपां तिबादिशक्तिं तत्स्थानित्वेन कल्पिते लकारे प्रकल्प्य लकाराः कर्मणि कर्त्तरि चानेन विधीयन्ते, नकारविसर्गादिनिष्ठां कर्मकरणादिबोधकताशक्तिमादाय शसादिविधानवत्।

न च सूत्रे कर्तृकर्मपदे कर्तृत्वकर्मत्वपरे। तथाच कर्तृत्वम्-कृतिः, कर्म्मत्वञ्च फलमेवार्थोऽस्त्विति शङ्क्यम्, फलव्यापारयोर्धातुलभ्यत्वेन लकारस्य पुनस्तत्र शक्तिकल्पनाऽयोगात्।

अथ दर्शनान्तरीयरीत्या व्यापारस्य धात्वर्थत्वाभावात्तत्र लकारविधिः स्यादिति चेत्, तर्हि कृतामपि कर्तृकर्म्मादिवाचित्वं न सिद्ध्येत्, `कर्त्तरि कृत्' इति च`लः कर्म्मणि' इत्यनेन तुल्ययोगक्षेमम्।

अपि च मीमांसकानां कृतामिवाऽऽख्यातानामपि कर्तृवाचित्वमस्तु, भावनाया एवाऽऽक्षेपेण कृदादिवत् प्रतीतिसम्भवे वाच्यत्वं माऽस्तु।

तथा सति प्राधान्यं तस्या न स्यादिति चेन्न, `घटमानय' इत्यादावाक्षिप्तव्यक्तेरपि प्राधान्यवदुपपत्तेः। पचतीत्यादौ पाकं करोतीति भावनाया विवरणदर्शनाद्वाच्यत्वमिति चेन्न, पाकाऽनुकूलव्यापारवतः कर्त्तुरपि विवरणविषयत्वाऽविशेषात्।

न च कर्त्तुर्विवरणं तात्पर्याऽर्थविवरणम्,पाकं करोतीत्यशब्दाऽर्थकर्मत्वविवरणवत्, इतरेतरयोगद्वन्द्वे समुच्चयांऽशविवरणवद्वा न तदर्थनिर्णाकमिति वाच्यम्, भावनायामपि तुल्यत्वात्।

किञ्च, `पचति देवदत्तः' इत्यत्राऽभेदान्वयदर्शनात्तदनुरोधेन कर्त्तुर्वाच्यत्वमावश्यकम् `पक्ता देवदत्तः' इतिवत्। नचाऽभेदबोधे समानविभक्तिकत्वं नियामकम्, तच्चात्र नास्तीति वाच्यम्, `सोमेन यजेत' `स्तोकं पचति' `राजपुरुषः' इत्यादावप्यभेदबोधाऽनापत्तेः।

नच लक्षणया कर्त्तुरुक्तत्वात् सामानाधिकरण्यम्, पिङ्गाक्ष्यादियौगिकानामपि द्रव्यवाचित्वाऽनापत्तेः। एवं वैश्वदेवीत्यादितद्धितानामपि, `अनेकमन्यपदार्थे' `साऽस्य देवता' इत्यनुशासनेन पिङ्गे अक्षिणी यस्याः, विश्वे देवा देवता अस्या इति विग्रहदर्शनात् प्रधानषष्ठ्यर्थे एव अनुशासनलाभात्।

तथाच `अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति' इति वाक्ये द्रव्याऽनुक्तेरारुण्यस्य स्ववाक्योपात्तद्रव्ये

एवाऽन्वयप्रतिपादकाऽरुणाधिकरणोच्छेदाऽऽपत्तिः, द्रव्यवाचकत्वसाधकमूलयुक्तेः सामानाधिकरण्यस्योक्तरीत्योपपत्तेरिति प्रपाञ्चितं विस्तरेण बृहद्वैयाकरणभूषणे।

तिङः इति। बोधकतारूपा शक्तिस्तिङ्क्ष्वेवेत्यभिप्रेत्येदम्।

</1-1-2-1>

</1-1-2>

<1-1-3>वाक्ये भावनायाः एव मुख्यविशेष्यत्वम्

पदार्थं निरूप्य वाक्यार्थं निरूपयति-पले इत्यादि। विक्लित्त्यादि फलं प्रति।

<1-1-3-1>तिङर्थानाम् विशेषणत्वेन अन्वयप्रतिपादनम्

तिङर्थः-कर्तृकर्मसंख्याकालाः। तत्र कर्तृकर्मणी फलव्यापारयोर्विशेषणे।

<1-1-3-1-1>तिङर्थसंख्यायाः कुत्रान्वय इति निर्धारणम्

संख्या कर्तृप्रत्यये कर्तरि, कर्मप्रत्यये कर्मणि, समानप्रत्ययोपात्तत्वात्।

तथाच `आख्यातार्थसंख्याप्रकारकबोधं प्रति आख्यातजन्यकर्तृकर्मोपस्थिर्हेतुः' इति कार्यकारणभावः फलितः।

<1-1-3-1-1-1>तत्र नैयायिकमतनिरासः

नैयायिकादीनामाख्यातार्थसङ्ख्यायाः प्रथमान्तार्थे एवाऽन्वयात् `आख्यातार्थसंख्याप्रकारकबोधे प्रथमान्तपदजन्योपस्थितिर्हेतुः' इति कार्यकरणभावो वाच्यः। सोऽपि `चन्द्र इव मुखं दृश्यते' `देवदत्तो भुक्त्वा व्रजति'इत्यादौ चन्द्रक्त्वार्थयोराख्यातार्थानन्वयादितराऽविशेषणत्वघटित इत्यतिगौरवम्। इदमपि कर्तृकर्मणोराख्यातार्थत्वे मानमिति स्पष्टं भूषणे।

</1-1-3-1-1-1>

</1-1-3-1-1>

<1-1-3-1-2>तिङर्थकालस्य व्पापारविशेषणत्वम्

कालस्तु व्यापारे विशेषणम्, तथाहि -`वर्त्तमाने लट्' (पा० सू० 3-2-123) इत्यत्राऽधिकाराद् धातोरिति लब्धम्। तच्च धात्वर्थं वदत् प्राधान्याद् व्यापारमेव ग्राहयतीति तत्रैव तदन्वयः। नच सङ्ख्यावत् कर्तृकर्मणोरेवान्वयः शङ्क्यः,अतीतभावनाके कर्तरि पचतीत्यापत्तेः,अपाक्षीदित्यनापत्तेश्च। पाकानारम्भदशायां कर्तृसत्त्वे पक्ष्यतीत्यनापत्तेश्च। नापि फले तदन्वयः,फलाऽनुत्पत्तिदशायां व्यापारसत्त्वे, पचतीत्यनापत्तेः, पक्ष्यतीत्यापत्तेश्चेत्यवधेयम्।

नचाऽऽमवातजडीकृतकलेबरस्योत्थानाऽनुकूलयत्नसत्त्वादुत्तिष्ठतीति प्रयोगापत्तिः, परयत्नस्याज्ञानादप्रयोगात्। किञ्चिच्चेष्टादिना तदवगतौ च, अयमुत्तिष्ठति, शक्त्यभावात् फलन्तु न जायते इति लोकप्रतीतेरिष्टत्वात्।

</1-1-3-1-2>

एवञ्च तिङर्थो विशेषणमेव,

</1-1-3-1>

भावनैव प्रधानम्।

यद्यपि प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यमन्यत्र दृष्टम्, तथाऽपि `भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि' इति (नि० अ० 2 ख 2) निरुक्तात्, भूवादिसूत्रादिस्थक्रियाप्राधान्यबोधकभाष्याच्च धात्वर्थभावनाप्राधान्यमध्यवसीयते।

<1-1-3-2>आख्यातार्थकर्तृकर्मणोः प्राधान्यवादिविशिष्टाद्वैतिमतखण्डनम्

अपिच, आख्यातार्थप्राधान्ये तस्य देवदत्तादिभिः सममभेदान्वयात् प्रथमान्तस्य प्राधान्यापत्तिः। तथाच, `पश्य मृगो धावति' इत्यत्र भाष्यसिद्धैकवाक्यता न स्यात्, प्रथमान्तमृगस्य धावनक्रियाविशेष्यस्य दृशिक्रियायां कर्म्मत्वापत्तौ द्वितीयापत्तेः।

नचैवमप्रथमासामानाधिकरण्याच्छतृप्रसङ्गः, एवमपि द्वितीयाया दुर्वारत्वेन `पश्य मृगः' इत्यादिवाक्यस्यैवाऽसम्भवापत्तेः।

न च पश्येत्यत्र तमिति कर्माध्याहार्य्यम्,वाक्यभेदप्रसङ्गात्, उत्कटधावनक्रियाविशेषस्यैव दर्शनकर्मतयाऽन्वयस्य प्रतिपिपादयिषितत्वात्, अध्याहारेऽनन्वयापत्तेश्च।
</1-1-3-2>
<1-1-3-3> प्रथमान्तमुख्यविशेष्यत्ववादिनैयायिकमतखण्डनम्

एवञ्च, `भावनाप्रकारकबोधे प्रथमान्तपदजन्योपस्थितिः कारणम्' इति नैयायिकोक्तं नादरणीयम्। किन्तु `आख्यातार्थकर्तृप्रकारकबोधे धातुजन्योपस्थितिर्भावनात्वावच्छिन्नविषयतया कारणम्' इति कार्यकारणभावो द्रष्टव्यः। भावनाप्रकारकबोधं प्रति तु कृज्जन्योपस्थितिवद् धात्वर्थभावनोपस्थितिरपि हेतुः, `पस्य मृगो धावति', `पचति भवति' इत्याद्यनुरोधादिति दिक्।
</1-1-3-3>
इत्थञ्च पचतीत्यत्रैकाऽऽश्रयिका पाकाऽनुकूला भावना। पच्यते इत्यत्रैकाऽऽश्रया या विक्लित्तिस्तदनुकूला
भावनेति बोधः।
</1-1-3>
देवदत्तादिपदप्रयोगे त्वाख्यातार्थकर्त्रादिभिस्तदर्थस्याऽभेदाऽन्वयः। `घटो नश्यति'इत्यत्र घटाऽभिन्नाऽऽश्रयको नाशाऽनुकूलो व्यापार इति बोधः। स च व्यापारः प्रतियोगित्वविशिष्टनाशसामग्रीसमवधानम्। अत एव तस्यां सत्यां नश्यति, तदत्यये 'नष्टः' तद्भावित्वे नङ्क्ष्यतीति प्रयोगः। `देवदत्तो जानाति', इच्छती'त्यादौ च देवदत्ताऽभिन्नाऽऽश्रयको ज्ञानेच्छाद्यनुकूलो वर्तमानो व्यापार इति बोधः। स चान्तत आश्रयतैवेतिरीत्योह्यम् ।। 2 ।।
</1-1>
<1-2> आख्यातार्थकर्तृकर्मणोः तात्पर्यग्राहकाः
नन्वाख्यातस्य कर्तृकर्मशक्तत्वे `पचति' इत्यत्रोभयबोधापत्तिः। कर्तृमात्रबोधवत् कर्ममात्रस्यापि बोधापत्तिरित्यतस्तात्पर्यग्राहकमाह-

फलव्यापारयोस्तत्र फले तङ्यक्चिणादयः।
व्यापारे शप्श्नमाद्यास्तु द्योतयन्त्याश्रयाऽन्वयम् ।। 3 ।।

तङादयः फले आश्रयाऽन्वयं द्योतयन्ति, फलाऽन्वय्याश्रयस्य कर्मत्वात्। तद्द्योतकाः=कर्मद्योतकाः। व्यापाराऽन्वय्याश्रयस्य कर्तृत्वात्। तद्द्योतकाः=कर्तृद्योतका इति समुदायार्थः। द्योतयन्ति=तात्पर्य्यं ग्राहयन्ति ।। 3 ।।

नन्वेवं `क्रमादमुं नारद इत्यबोधि स' इत्यादौ, पच्यते ओदनः स्वयमेव' इत्यादौ च व्यभिचारः, कर्मणः कर्तृत्वविवक्षायां कर्त्तरि लकारे सति, `कर्मवत् कर्मणा तुल्यक्रियः' (पा० सू० 3-1-87) इत्यतिदेशेन यगात्मनेपदचिण्चिण्वदिटामतिदेशाद्यगादिसत्त्वेऽपि कर्त्तुरेव बोधात्, व्यापारे एवाश्रयान्वयाच्च। अबोधीत्यत्रापि बुध्यतेः कर्त्तरि लुङ्, तस्य "दीपजन" (पा० सू० 3-1-61) इति चिण्, `चिणो लुक्' (पा० सू० 6-4-104) इति तस्य लुग् इति साधनादित्याशङ्कायामाह-

उत्सर्गोऽयं कर्मकर्तृविषयादौ विपर्य्ययात्।
तस्माद् यथोचितं ज्ञेयं द्योतकत्वं यथागमम् ।। 4 ।।

कर्मकर्तृविषयादौ=पच्यते ओदनः स्वयमेव, इत्यादौ। अत्र ह्येकौदनाभिन्नाश्रयकः पाकानुकूलो व्यापार इति बोधः।

`क्रमात्' इति आदिपदग्रह्यम्। अत्र `सामान्यविशेषज्ञानपूर्वक एकनारदविषयकज्ञानाऽनुकूलः कृष्णाभिन्नाश्रयकोऽतीतो व्यापारः' इति बोधः। यथोचितमिति=सकर्मकधातुसमभिव्याहृतभावसाधारणविधिवेधेयचिण्यगादि कर्मद्योतकमिति भावः ।। 4 ।।
</1-2>
<1-3>लिङतिरिक्तलडाद्यन्ते भावनायाः अवाच्यत्ववादिप्राभाकरमतखण्डनम्

एवं सूचीकटाहन्यायेन सोपपत्तिकं वाक्यार्थमुपवर्ण्य `फलव्यापारयोः' इति प्रतिज्ञातं धातोर्व्यापारवाचित्वम्, लडाद्यन्ते भावनाया अवाच्यत्वं वदतः प्राभाकरादीन् प्रति व्यवस्थापयति-
<1-3-1> भावना-क्रिया-व्यापारः-उत्पादना इत्येतेषाम् पर्यायता

व्यापारो भावना सैवोत्पादना सैव च क्रिया।

कृञोऽकर्म्मकतापत्तेर्न हि यत्नोऽर्थ इष्यते ।। 5 ।।

पचति=पाकमुत्पादयति, पाकानुकूला भावना, तादृश्युत्पादना इति विवरणाद् विव्रियमाणस्यापि तद्वाचकतेति भावः। व्यापारपदं च फूत्कारादीनामयत्नानामपि फूत्कारत्वादिरूपेण वाच्यतां ध्वनयितुमुक्तम्। अत एव पचतीत्यत्र अधःसन्तापनत्व-फूत्कारत्व-चुल्ल्युपरिधारणत्वयत्नत्वादिभिर्बोधः सर्वसिद्धः।

<1-3-2> कृतित्वस्य शक्यतावच्छेदकत्वनिरासः

नचैवमेषां शक्यताऽवच्छेदकत्वे गौरवापत्त्या कृतित्वमेव तदवच्धेदकं वाच्यम्, `रथो गच्छति' जानातीत्यादौ च व्यापारत्वादिप्रकारकबोधो लक्षणयेति नैयायिकरीतिः साध्वी, शक्यताऽवच्छेदकत्वस्यापि लक्ष्यताऽवच्छेदकत्ववद् गुरुणि सम्भवात्,
तयोर्वैषम्ये बीजाभावात्।

<1-3-2-1> करोतिनाविवरणात् आख्यातस्य यत्नार्थत्वमिति मतस्य खण्डनम्

नच पचति=पाकं करोतीति यत्नार्थककरोतिना विवरणाद् यत्न एवाऽऽख्यातार्थ इति वाच्यम्।
`रथो गमनं करोति'बीजादिना अङ्कुरः कृतः' इति दर्शनात् कृञो यत्नार्थकताया असिद्धेः।
</1-3-2-1>
</1-3-2>
<1-3-3> भावनायाः अवाच्यत्वे दोषप्रदर्शनम्
<1-3-3-1> भावनायाः अवाच्यत्वे घटो भवतीत्यत्र घटपदात-द्वितीयापत्तिः

किञ्च, भावनाया अवाच्यत्वे घटं भावयतीत्यत्रेव घटो भवतीत्यत्रापि द्वितीया स्यात्।

नचात्र घटस्य कर्तृत्वेन तत्संज्ञया कर्म्मसंज्ञाया बाधान्न द्वितीयेति वाच्यम्, अनुगतकर्तृत्वस्य त्वन्मते दुर्वचत्वेन घटस्याकर्तृत्वात्। कृत्याश्रयत्वस्य, कारकचक्रप्रयोक्तृत्वस्य वा घटादावभावात्, धात्वर्थानुकूलव्यापाराश्रयत्वस्य च कारकमात्रातिव्यापकत्वात्।
</1-3-3-1>
<1-3-3-2> भावनायाः अवाच्यत्वे सकर्मकत्वाकर्मकत्वव्यवस्थानापत्तिः

अपिच भावनाया अवाच्यत्वे धातूनां सकर्म्मकत्वाकर्म्मकत्वविभाग उच्छिन्नः स्यात्। `स्वार्थफलव्यधिकरणव्यापारवाचकत्वम्', `स्वार्थव्यापारव्यधिकरणफलवाचकत्वम्' वा सकर्म्मकत्वं भावनाया वाच्यत्वमन्तरेणासम्भवि।

`अन्यतमत्वं तत्त्वम्' इति चेन्न, एकस्यैवार्थभेदेनाकर्म्मकत्व-सकर्म्मकत्वदर्शनात्। तदेतदभिसन्धायाह-कृञ इति।
</1-3-3-2>
<1-3-3-3> व्यापारस्य अवाच्यत्वे फलमात्रस्य धात्वर्थत्वे दोषप्रदर्शनम्

अयं भावः-व्यापाराऽवाच्यत्वपक्षे फलमात्रमर्थ इति फलितम्। तथाच करोतीत्यादौ यत्नप्रतीतेस्तन्मात्रं वाच्यमभ्युपेयम्। तथाच `यती प्रयत्ने' इतिवत् फलस्थानीययत्नवाचकत्वाविशेषादकर्म्मकतापत्तिरुक्तरीत्या दुर्व्वारेति।

तथाच `न हि यत्नः' इत्यत्र फलस्थानीयत्वेनेति शेषः। कृञ इति-धातुमात्रोपलक्षणम्, सर्वेषामप्यकर्म्मकता, सकर्म्मकता वा स्यादिति भावः।
</1-3-3-3>
<1-3-4>धातोः केवलव्यापारवाचित्वनिरासः

अथवा, `व्यापारो भावना' इत्यर्धेन व्यापारस्य वाच्यत्वं प्रसाध्य फलांशस्यापि तत् साधयन् नैयायिकाभ्युपगतं जानाति-करोत्यादेः केवलज्ञान-यत्नादिक्रियामात्रवाचित्वं दूषयति-कृञ इति।

अयं भावः-फलांशस्यावाच्यत्वे व्यापार एव धात्वर्थः स्यात्। तथाच स्वार्थफलव्यधिकरणव्यापारवाचित्वादिरूपसकर्म्मत्वोच्छेदापत्तिः। नच कृञादौ सकर्मकत्वव्यवहारो भाक्त इति नैयायिकोक्तं युक्तम्, व्यावहारस्य भाक्तत्वेऽपि कर्म्मणि लकारासम्भवात्।
नहि तीरे गङ्गापदस्य भाक्तत्वेऽपि तेन स्नानादिकार्य्यं कर्त्तुं शक्यम्। एवञ्च `नहि यत्नः' इत्यत्र यत्नमात्रमित्यर्थः ।। 5 ।।
<1-3-4-1> फलस्यावाच्यत्वे कृञः कर्मकर्तरि कर्मवद्भावानापत्तिः

अत एवाह-

किन्तूत्पादनमेवातः कर्म्मवत् स्याद् यगाद्यपि।
कर्म्मकर्त्तर्य्यन्यथा तु न भवेत् तद् दृशेरिव ।। 6 ।।

उत्पादनम्=उत्पत्तिरूपफलसहितं यत्नादि कृञर्थ इत्यर्थः।

फलस्य वाच्यत्वे युक्त्यन्तरमाह-अत इत्यादि। यतः कृञो यत्नमात्रमर्थो नेष्यते, अतः। `कर्मवत् स्यात्' इतिपदेन `कर्म्मवत् कर्म्मणा तुल्यक्रियः' (पा० सू० 3-1-87) इति सूत्रं लक्ष्यते। अयमर्थः-यत एवास्योत्पादनार्थकता, अतः पच्यते ओदनः स्वयमेवेतिवत्, क्रियते घटः स्वयमेवेति यगादयोऽप्युपपद्यन्ते। अन्यथा यत्नस्य कर्म्मनिष्ठत्वाभावात् तन्न स्यात्, दृशिवत्। यथा दृश्यते घटः स्वयमेवेति न दर्शनस्य घटावृत्तित्वात्, तथा यत्नस्यापि, इति तथा प्रयोगानापत्तेरिति ।। 6 ।।
<1-3-4-1-1>जानातीत्यादावपि कर्मकर्तरि कर्मवद्भावापत्तिशङ्का-तत्परिहारश्च

नन्वेवं कृञादेरिव जानातीत्यादेरपि विषयावच्छिन्नावरणभङ्गादिफलवाचित्वमावश्यकम्, अन्यथा सकर्म्मकतानापत्तेः। तथाच ज्ञायते घटः स्वयमेवेति किन्न स्यात्।
एवं ग्रामो गम्यते स्वयमेवेत्याद्यपीत्याशङ्कां मनसि कृत्वाह-

निर्वर्त्त्ये च विकार्य्ये च कर्म्मवद्भाव इष्यते।
न तु प्राप्ये कर्म्मणीति सिद्धान्तोऽत्र व्यवस्थितः ।। 7 ।।

ईप्सितं कर्म्म त्रिविधम्-निर्वर्त्यम्,विकार्य्यम्, प्राप्यञ्च। तत्राद्ययोः कर्म्मवद्भावः,नान्त्ये। प्राप्यत्वञ्च-क्रियाकृतविशेषानुपलभ्यमानत्वमिति सुबर्थनिर्णये वक्ष्यते। नह्ययं घटः केनचिद् दृष्टो ग्रामोऽयं केनचिद् गत इति शक्यं कर्म्मदर्शनेनाऽवगन्तुम्।

घटं करोतीति निर्वर्त्त्ये, सोमं सुनोतीति विकार्य्ये च तज्ज्ञातुं शक्यमिति न तत् प्राप्यम्। तथाच घटादेर्दृश्यादौ प्राप्यकर्म्मत्वान्नोक्तातिप्रसङ्ग इति भावः।
</1-3-4-1-1>
</1-3-4-1>
<1-3-4-2>धातूनाम् फलावाचकत्वे त्यजिगम्योः पर्यायतापत्तिः

धातूनां फलावाचकत्वे त्यजिगम्योः पर्य्यायतापत्तिः, क्रियावाचकत्वाविशेषात्। फलस्योपलक्षणत्वेऽप्येकक्रियाया एव पूर्वदेशविभागोत्तरदेशसंयोगजनकत्वादुक्तदोषतादवस्थ्यमित्यपि वदन्ति। तस्मादावश्यकं सकर्म्मकाणां फलवाचकत्वम्।

अकर्म्मकाणां तु तन्निर्विवादमेव, "भू सत्तायाम्" इत्याद्यनुशासनाच्च । अत एव `द्व्यर्थः पचिः' इति भाष्यं सङ्गच्छते इति दिक् ।। 7 ।।
</1-3-4-2>
</1-3-4>
<1-4> फलमात्रं धात्वर्थः भावना तिङर्थः इति भाट्ट(मण्डनमिश्र)मतखण्डनम्
<1-4-1> भाट्ट(मण्डनमिश्र)मतम्
एवं सिद्ध्यतु फलव्यापारयोर्वाच्यत्वम्, किन्तु आख्यातवाच्यैव सा भावना, न धातोः, प्राधान्येन प्रतीयमानस्य व्यापारस्य धात्वर्थतायाः 'प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्यम्' इतिन्यायविरुद्धत्वात् `तदागमे हि दृश्यते' इति न्यायविरुद्धत्वाच्च।

एवञ्च `स्वायुक्ताख्यातार्थव्यापारव्यधिकरणफलवाचकत्वं सकर्म्मकत्वम्, आख्यातार्थव्यापाराश्रयत्वञ्च कर्तृत्वं वाच्यम्' इत्यादि वदन्तं मीमांसकम्मन्यं प्रत्याह-
<1-4-2> भाट्टमतखण्डनम्

तस्मात् करोतिर्धातोः स्याद् व्याख्यानं नत्वसौ तिङाम्।
पक्वान् कृतवान् पाकं किं कृतं पक्वमित्यपि ।। 8 ।।

तस्मात्=अभिप्रायस्थहेतोः।
स चेत्थम्-फलमात्रस्य धात्वर्थत्वे `ग्रामो गमनवान्' इति प्रयोगापत्तिः, संयोगाश्रयत्वात्। फलानुत्पाददशायां व्यापारसत्त्वे `पाको भवति'

इत्यनापत्तिः, व्यापारविगमे फलसत्त्वे पाको विद्यत इत्यापत्तिश्च।
<1-4-2-1> घञादेः अनुकूलव्यापारवाचित्वखण्डनम्

यत्तु, भावप्रत्ययस्य घञादेरनुकूलव्यापारवाचकत्वान्नानुपपत्तिरिति, तन्न, कर्त्राख्यातवत् `कर्तरि कृत्' इत्यत एव तद्विधानलाभे भावे विधायकाऽनुशासनवैयर्थ्यापत्तेः, तद्विरोधापत्तेश्च। अथ व्यापारोऽपि धात्वर्थ इत्यभ्युपेयमिति चेत्तर्हि धातुत एव सकलव्यापारलाभसम्भवेनाख्यातस्य पृथक्शक्तिकल्पने गौरवमिति।
</1-4-2-1>
<1-4-2-2>विवरणात्मा करोतिः धातोरेव व्याख्यानम्,न तिङां व्याख्यानम्

पचतीत्यस्य पाकं करोतीति विवरणात्मा करोतिर्धातोरेव व्याख्यानम्=विवरणम्, अतस्तदपि नाख्यातार्थत्वसाधकमिति भावः। मीमांसकोक्तं बाधकमुद्धरंस्तन्मतं दूषयति-नत्वित्यादिना।

नाऽसौ तिङां व्याख्यानम्, `पक्ववान्' इत्यादावनन्वयापत्तेः।

अयं भावः-"प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थः प्रधानम्" इत्यत्र हि `विशेष्यतया प्रकृत्यर्थप्रकारकबोधे(बोधम्प्रति)तदुत्तरप्रत्ययजन्योपस्थितिर्हेतुः' इति कार्य्यकारणभावः फलितः। तथाच पक्ववानित्यत्र पाकः कर्म्मकारकम्, क्तवतुप्रत्ययार्थः कर्तृकारकम्। तयोश्चारुणाधिकरणोक्तरीत्या, वक्ष्यमाणाऽस्मद्रीत्या चान्वयासम्भव इति प्रकृतिप्रत्ययार्थयोरन्वयनियमस्यौवाऽभावे क्व प्राधान्यबोधक उक्तकार्य्यकारणभावः। नच
</1-4-2-2>
<1-4-2-3>संबन्धसामान्येन कारकाणामन्वय इत्यस्य खण्डनम्

सम्बन्धमात्रमुक्तञ्च श्रुत्या धात्वर्थभावयोः।
तदेकांशनिवेशे तु व्यापारोऽस्या न विद्यते।।

इति भट्टपादोक्तरीत्या सम्बन्धसामान्येन कारकाणामन्वयः शङ्क्यः, योग्यताविरहात् अन्वयप्रयोजकरूपवत्त्वस्यैव तथात्वात्।

क्रियात्वमेव हि कारकान्वयिताऽऽवच्छेदकमिति वक्ष्यते। तदेतदाविष्कर्त्तुंविवरणेन धात्वर्थक्तवत्वर्थयोः कर्म्मत्व-कर्तृत्वे दर्शयति-`कृतवान् पाकम्' इति।
</1-4-2-3>
<1-4-2-4> प्रत्ययार्थप्राधान्यनियमस्य औत्सर्गिकत्वम्

वस्तुतस्तु `प्रत्ययार्थः प्रधानम्'इत्यस्य, यः प्रधानं स प्रत्ययार्थ एवेति वा, यः प्रत्ययार्थः स प्रधानमेवेति वा नार्थः, `अजा' `अश्वा' छागीत्यत्र स्त्रीप्रत्ययार्थे स्त्रीत्वस्यैव प्राधान्यापत्तेः, छाग्यादेरनापत्तेश्च। किन्तूत्सर्गोयम्।
विशेष्यत्वादिना बोधस्तु तथा व्युत्पत्त्यनुरोधात्। अत एव नैयायिकानां प्रथमान्तविशेष्यक एव बोधः। लक्षणायामालङ्कारिकाणां शक्यतावच्छेदकप्रकारक एव बोधः, न नैयायिकादीनाम्। घटः, कर्म्मत्वम्, आनयनं कृतिरित्यादौ विपर्य्ययेणापि व्युत्पन्नानां नैयायिकनव्यादीनां बोधः, न तु तद्व्युत्पत्तिरहितानाम्। अन्येषां तन्निराकाङ्क्षमेवेत्यादिकं सङ्गच्छते।

अत एव " प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात्" (पा० सू० 1-2-56) इत्याह भगवान् पाणिनिः।

`प्रधानं प्रत्ययार्थः' इति वचनम् (`न'इत्यनुवर्त्य) न कार्य्यम्, अर्थस्य=तथाबोधस्य, अन्यप्रमाणत्वात्=व्युत्पत्त्यनुसारित्वादिति हि तदर्थः। एवं सत्यपि नियामकापेक्षणे च "भावप्रधानमाख्यातम्" इति वचनमेव गृह्यतामिति सुधीभिरूह्यम्।
</1-4-2-4>
<1-4-2-5> तदागमेहीति न्यायो विवरणं च अतिव्याप्तम्

`तदागमे हि' इति न्यायो विवरणञ्चऽतिव्याप्तमित्याह-किं कृतं पक्वमिति।
कृञा विवरणं प्रतीतिश्च पक्वमित्यत्रापि, इति तत्रापि भावना वाच्या स्यादिति भावः।
</1-4-2-5>
<1-4-2-6> कृतामपि भावनावाचित्वखण्डनम्
नन्वस्तु तिङ इव कृतामपि भावना वाच्येत्यत आह-अपीति-तथाचोभयसाधारण्येन तत्प्रतीतेरुभयसाधारणो धातुरेव वाचक इति भावः।

भवद्रीत्या प्रत्ययार्थत्वात् प्राधान्यापत्तिश्चेति द्रष्टव्यम् ।। 8 ।।
</1-4-2-6>
<1-4-2-7>धातोः व्यापारावाचकत्वे कर्तरि कर्मणि च विहितानां कृताम् अन्वयासंभवः
साधकान्तरमाह-

किं कार्य्यं पचनीयं चेत्यादि दृष्टं हि कृत्स्वपि।
किञ्च क्रियावाचकतां विना धातुत्वमेव न ।। 9 ।।

`कार्य्यम्'इत्यत्र `ऋहलोर्ण्यत्' (पा० सू० 3-1-184) इति कर्मणि ण्यत्। `पचनीयम्' इत्यादौ चानीयर्। आदिना 'ज्योतिष्टोमयाजी' इत्यादौ करणे उपपदे कर्तरि णिनिः। एते च क्रिययोगमन्तरेणासन्तस्तद्वाच्यतां बोधयन्ति, विना क्रियां कारकत्वासम्भवेन तद्वाचकप्रत्ययस्याप्यऽसम्भवात्। नच `गम्यमानक्रियामादाय कारकयोगः' इति भाट्टरीतिर्युक्ता, आख्यातेऽपि तथात्वापत्तौ तत्रापि भावनाया वाच्यत्वासिद्धयापत्तेः।
</1-4-2-7>
<1-4-2-8> भावनायाः आक्षेप इत्यस्य निरासः

अथ लिङ्गसंख्यान्वयानुरोधात् कर्तुर्वाच्यत्वमावश्यकमिति तेनाऽक्षेपाद् भावनाप्रत्ययः स्यादिति मतम्, तर्हि संख्यान्वयोपपत्तये आख्यातेऽपि कर्त्ता वाच्यः स्यात्। `पक्ववान्' इत्यादौ कालकारकान्वयानुरोधाद् भावनाया अपि वाच्यत्वस्याऽऽवश्यकत्वाच्चेति भावः।
</1-4-2-8>
<1-4-2-9> नखभिन्न इत्यादौ समासो न स्यात्

अपिना हेत्वन्तरसमुच्चयः। तथाहि-नखैर्भिन्नः `नखभिन्नः',हरिणा त्रातः `हरित्रातः' इत्यादौ, "कर्तृकरणे कृता बहुलम्" (पा० सू० 2-1-32) इति समासो न स्यात्, `पुरुषो राज्ञो भार्य्या देवदत्तस्य' इतिवद्, असामर्थ्यात्।
<1-4-2-9-1> नखभिन्न इत्यादौ अध्याहृतक्रियामादाय न सामर्थ्यम्

नचाध्याहृतक्रियामादाय सामर्थ्यं वाच्यम्, `दध्योदनः' `गुडधानाः' इत्यादिवत्। अन्यथा तत्रापि "अन्नेन व्यञ्जनम्" (पा० सू० 2-1-34) "भक्ष्येण मिश्रीकरणम्" (पा० सू० 2-1-35) इति समासो न स्यादिति वाच्यम्, तत्र विध्यानर्थक्यादगत्या तथा स्वीकारेऽपि `हरिकृतम्' इत्यादौ साक्षाद्धात्वर्थान्वयेनोपपद्यमानस्य, "कर्तृकरणे" इत्यस्याक्षेपेण परम्परासम्बन्धे प्रवृत्त्ययोगात्।
</1-4-2-9-1>
<1-4-2-9-2> एकक्रियान्वयित्वम् न सामर्थ्यम्
नचैकक्रियान्वयित्वमेव सामर्थ्यमिति शङ्कयम्, `असूर्यम्पश्याः' इत्यादेरसमर्थसमासत्वानापत्तेः। इष्टापत्तौ कृतः सर्वो मृत्तिकयेत्यत्र 'कृतसर्वमृत्तिकः' इत्यापत्तेः। नचाऽत्र समासविधायकाभावः, "सह सुपा" (पा० सू० 2-1-4) इत्यस्य सत्त्वात्। अन्यथा असमर्थसमासोऽपि विधायकाभावान्न स्यादिति।
</1-4-2-9-2>
<1-4-2-10> भावनायाः तिङर्थत्वे दोषप्रदर्शनम्
<1-4-2-10-1> भावयति घटमितिवत् भवति घटमिति प्रयोगापत्तिः
किञ्च, भावनायास्तिङर्थत्वे `भावयति घटम्' इतिवद् `भवति घटम्' इत्यपि स्यात्, धात्वर्थफलाश्रयत्वरूपकर्मत्वसत्त्वात्। नचाख्यातार्थव्यापाराश्रयत्वेन कर्तृत्वात्तत्संज्ञया कर्मसंज्ञाया बाधान्न द्वितीयेति वाच्यम्,
</1-4-2-10-1>
<1-4-2-10-2>'पाचयति देवदत्तो विष्णुमित्रेण' - विष्णुमित्रात् तृतीयानापत्तिः
'ग्रामं गमयति देवदत्तो विष्णुमित्रम्' - ग्रामस्य गमिकर्मत्वानापत्तिः

आख्यातार्थव्यापाराश्रयस्य कर्तृत्वे `पाचयति देवदत्तो विष्णुमित्रेण' इत्यत्र विष्णुमित्रस्याकर्तृतापत्तौ तृतीयानापत्तेः, `ग्रामं गमयति देवदत्तो विष्णुमित्रम्' इत्यत्र विष्णुमित्रस्याकर्तृतापत्तौ ग्रामस्य गमिकर्मत्वानापत्तेश्च। तथाच ग्रामाय गमयति देवदत्तो विष्णुमित्रम्, इत्यपि न स्यात्, "गत्यर्थकर्माणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि" (पा० सू० 2-3-12) इति गत्यर्थकर्मण्येव चतुर्थीविधानात्। एतेन णिजन्ते आख्यातार्थ उभयम्,तदाश्रयत्वाद्देवदत्त-यज्ञदत्तयोः कर्तृतेत्यपास्तम्।
</1-4-2-10-2>
<1-4-2-10-3> आख्यातशून्ये देवदत्तः पक्तेत्यादौ देवदत्तस्य कर्तृत्वं न स्यात्

किञ्च, `तस्मिन् प्रयोगे य आख्यातार्थः' इत्यस्यावश्यकत्वेनाऽऽख्यातशून्ये-`देवदत्तः पक्ता' इत्यादौ देवदत्तस्याऽकर्तृतापत्तेरिति दिक्।
</1-4-2-10-3>

<1-4-2-11> क्रियावाचित्वाभावे धातुत्वानापत्तिः

सूत्रानुपपत्तिमपि मानत्वेन प्रदर्शयन्नुक्तार्थस्य स्वोत्प्रेक्षितत्वं निरस्यति-किञ्चेति।
<1-4-2-11-1> "भूवादयो धातवः" - सूत्रव्याख्या, धातुत्वपरिष्कारः

धातुसंज्ञाविधायकम्-"भूवादयो धातवः" (पा० सू० 1-3-1) इति सूत्रम्। तत्र भूश्च वाश्चेति द्वन्द्वः। आदिशब्दयोर्व्यवस्थाप्रकारकवाचिनोरेकशेषः। आदिश्च आदिश्च आदी, ततो भूवौ आदी येषां ते भूवादयः। तथाच भूप्रभृतयो वासदृशा धातव इत्यर्थः।तच्च क्रियावाचकत्वेन। तथाच 'क्रियावाचकत्वे सति भ्वादिगणपठितत्वं धातुत्वम्' पर्य्यवसन्नम्। अत्र क्रियावाचित्वमात्रोक्तौ वर्ज्जनादिरूपक्रियावाचके `हिरुक्' `नाना' इत्यादावतिव्याप्तिरिति `भ्वादिगणपठितत्वम्' उक्तम् ।। 9 ।।

तावन्मात्रोक्तौ चाऽह-
सर्वनामाव्ययादीनां यावादीनां प्रसङ्गतः।
नहि तत्पाठमात्रेण युक्तमित्याकरे स्पुटम् ।। 10 ।।

गणपठितत्वमात्रोक्तौ सर्वनामाव्ययानामपि धातुत्वं स्यात्। तथाच- `याः पश्यसि' इत्यादौ " आतो धातोः" (पा० सू० 6-4-240) इत्याकारलोपापत्तिः। ननु लक्षण-प्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणान्न सर्वनाम्नो ग्रहणम्, तस्य लाक्षणिकत्वादित्यत आह-वेत्यादि।
अव्यये=`वा' इत्यादावतिप्रसङ्गः तादृशस्यैव गणे पाठेन निर्णयासम्भवात्। तथाच विकल्पार्थकः
`वाति'इति प्रयोगः स्यादिति भावः। न च गतिगन्धनाद्यर्थनिर्द्देशो नियामकः, तस्य "अर्थानादेशनात्" इति भाष्यपर्य्यालोचनया आधुनिकत्वलाभात् ।। 10 ।।
</1-4-2-11-1>
<1-4-2-11-2> क्रिया नाम धात्वर्थः इति चेद् अन्योन्याश्रयः

नन्वस्तु `क्रियावाचकत्वे सति गणपठितत्वं धातुत्वम्', क्रिया च धात्वर्थ एव, न व्यापार इत्याशङ्कां समाधत्ते-

धात्वर्थत्वं क्रियात्वञ्चेद्धातुत्वं च क्रियार्थता।
अन्योऽन्यसंश्रयः स्पष्टस्तस्मादस्तु यथाऽऽकरम् ।। 11 ।।

यदि क्रियात्वं धात्वर्थत्वमेव तर्हि धातुत्वग्रहे तदर्थत्वरूपक्रियात्वग्रहः, क्रियात्वग्रहे च तदवच्छिन्नवाचकत्वघटितधातुत्वग्रह इत्यन्योन्याश्रय इति ग्रहपदं पूरयित्वा व्याख्येयम्। यथाश्रुते चान्योन्याश्रयस्योत्पत्तौ ज्ञप्तौ वा प्रतिबन्धकत्वाभ्युपगमेनासङ्गत्यापत्तेः।

न च `अन्यतमत्वं धातुत्वम्', "भूवादयः" इत्यस्य वैयर्थ्यापत्तेरित्यभिप्रेत्याह-अस्त्विति। व्यापारसन्तानः क्रिया, तद्वाचकत्वे सति गणपठितत्वमित्यर्थः। ननु सत्तादीन् फलांशानन्यतमत्वेनादाय तद्वाचकत्वे सति सणपठितत्वं लक्षणमुच्यताम्। धात्वर्थत्वात् तेषां क्रियाशब्देन व्यवहारो भाष्यादौ कृतोऽप्युपपत्स्यत इति चेन्न, अन्यतममध्ये विकल्पस्यापि `विकल्पयति'इति प्रयोगानुसारात् प्रवेशावश्यकत्वेन तदर्थके `वा
' इत्यव्यये उक्तरीत्या गणपठितत्वसत्त्वेनाऽतिव्याप्तेरिति ।। 11 ।।
</1-4-2-11-2>
<1-4-2-11-3>अस्त्यादावपि क्रियाप्रतीतिप्रतिपादनम्
नन्वस्यैव धातुत्वे `अस्ति' इत्यादौ क्रियाप्रतीत्यभावादस्त्यादीनां तदवाचकानामधातुत्वप्रसङ्ग इत्यत आह-

अस्त्यादावपि धर्म्यंशे भाव्येऽस्त्येव हि भावना।
अन्यत्राशेषभावात्तु सा तथा न प्रकाशते ।। 12 ।।

अस्त्यादौ=`अस् भुवि' इत्यादौ, धर्म्यंशे=धर्म्मिभागे, भाव्ये=भाव्यत्वेन विवक्षिते, अस्त्येव=प्रतीयत एव। अयमर्थः-`स ततो गतो न वा' इति प्रश्ने, महता यत्नेन `अस्ति' इति प्रयोगे सत्तारूपफलानुकूला भावना प्रतीयत एव।
उत्पत्त्यादिबोधने तु सुतराम्। रोहितो लोहितादासीद् धुन्धुस्तस्य सुतोऽभवत्। ( रामायणम् )। इत्यादिदर्शनात्।
किञ्च, अत्र भावनाविरहे लडादिव्यवस्था न स्यात्, तस्या एव वर्त्तमानत्वादिविवक्षायां तद्विधानात्।
"क्रियाभेदाय कालस्तु सङ्खया सर्वस्य भेदिका" इति वाक्यपदीयादिति।
नन्वेवम् अस्ति इत्यत्र स्पष्टं कुतो न बुद्ध्यत इत्यत आह-अन्यत्रेति।
अशेषभावात्=भावनायाः फलसमानाधिकरणत्वात्। तथाच भावनायाः फलसामानाधिकरण्यं तत्स्पष्टत्वे दोष इति भावः।

नन्वेवम् `किं करोति' इति प्रश्ने, `पचति' इत्युत्तरस्येव `अस्ती'त्युत्तरमपि स्यादिति चेत्, इष्टापत्तेः,
आसन्नविनाशं कञ्चिदुद्दिश्य `किं करोति' इति प्रश्ने, पचतीत्युत्तरस्येव, `अस्ति' इत्युत्तरस्य सर्वसम्मतत्वात्। इतरत्र तु सुस्थतया निश्चिते `किं करोति' इति प्रश्नः, पाकादिविशेषगोचर एवेत्यवधारणात् `अस्ति' इति नोत्तरमिति ।। 12 ।।

</1-4-2-11-3>
</1-4-2>
<1-4-3> धातोः फलव्यापारोभयवाचकत्वे सर्वस्य सकर्मकत्वापत्तिशङ्कापरिहारौ

नन्वेवं भावनायाः फलनियतत्वात्, पलाश्रयस्य च कर्मत्वात्, सर्वेषां क्रियावाचकत्वे सकर्म्मकतापत्तिरित्यत आह-
<1-4-3-1> धातोः अकर्मकत्व-सकर्मकत्वनिर्वचनम्

फलव्यापारयोरेकनिष्ठतायामकर्म्मकः।
धातुस्तयोर्धर्म्मिभेदे सकर्म्मक उदाहृतः ।। 13 ।।

एकनिष्ठतायाम्=एकमात्रनिष्ठतायां भिन्नाधिकरणावृत्तितायामिति यावत्। तेन गम्यादौ फलस्य कर्तृनिष्ठत्वेऽपि नातिव्याप्तिः। अकर्म्मको यथा-भ्वादिः। तयोः= फलव्यापारयोः आश्रयभेदे सकर्मक इत्यर्थः। उक्तञ्च वाक्यपदीये-
आत्मानमात्मना बिभ्रदस्तीति व्यपदिश्यते।

अन्तर्भावाच्च तेनासौ कर्म्मणा न सकर्म्मकः।। इति ।
बिभ्रदिति-तेन स्वधारणानुकूलो व्यापारोऽत्रापि गम्यत इति भावः। तेन=कर्म्मणा सकर्म्मकत्वन्तु न, अन्तर्भावात्=फलांशेन सामानाधिकरण्यसत्त्वादित्यर्थः। `आत्मानं जानाति' `इच्छति' इत्यादौ च द्वावात्मनौ=शरीरात्मा, अन्तरात्मा च। तत्रान्तरात्मा तत्कर्म्म करोति येन शरीरात्मा सुखदुःखे अनुभवतीति "कर्म्मवत्कर्मणा" (पा० सू० 3-1-87) इति सूत्रीयभाष्योक्तरीत्या भिन्नाधिकरणनिष्ठतामादाय सकर्म्मकत्वमित्यवधेयम् ।। 13 ।।
</1-4-3-1>
</1-4-3>
<1-4-4>"पाक" इत्यादिभावकृदन्ते प्रकृतिप्रत्ययभागाभ्यां क्रियायाः साध्यसिद्धावस्थयोः प्रतीत्युपपादनम्

नन्वसत्त्वभूतक्रियाया धात्वर्थत्वे `पाकः' इत्यत्रापि तत्प्रत्ययापत्तिः। नचेष्टापत्तिः, " कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति भाष्यविरोधादित्यत आह-

आख्यातशब्दे भागाभ्यां साध्यसाधनरूपता।
प्रकल्पिता यथा शास्त्रे स घञादिष्वपि क्रमः ।। 14 ।।

आख्यातशब्दे=`पश्य मृगो धावति' इत्यादौ, भागाभ्यम्=तिङन्ताभ्याम्, प्रकृतिप्रत्ययभागाभ्यामिति विवरणकारोक्तमपव्याख्यानम्, पचतीत्यत्राऽपि भागद्वयसत्त्वात्। साध्यसाधनरूपता यथाक्रमं ग्राह्या।
साध्यत्वम्-क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपवत्त्वम्। साधनत्त्वम्-कारकत्वेनान्वयित्वम्। स घञादिष्वपीति-प्रकृत्या साध्यावस्था, प्रत्ययेन साधनावस्था। इयान् परं विशेषः-घञाद्युपस्थाप्या लिङ्गसङ्ख्यान्वयिनी, कारकान्वयिनी च। आख्यातान्तोपात्ता तु नैवम्। तथापि कारकत्वेनान्वयित्वमात्रेण दृष्टान्तदार्ष्टान्तिकतेत्यवधेयम्।
<1-4-4-1> घञाद्यन्ते धातुना साध्यक्रियायाः अभिधाने प्रमाणम्
नच घञन्ते धातुना तथाभिधाने मानाभावः, ओदनस्य पाकः' इति कर्म्मषष्ठया मानत्वात्। नचाध्याहृततिङन्तक्रियान्वयात् षष्ठी, "कर्तृकर्म्मणोः कृति" (पा० सू० 2-3-64) इति कृदन्तेन योग एव तद्विधानात्, "न लोकाव्ययनिष्ठाखलर्थतृनाम्" (पा० सू० 2-3-69) इति लादेशयोगे षष्ठीनिषेधाच्च। एवंरीत्या 'काष्ठैः पाकः' इत्याद्यपीष्टमेव।
</1-4-4-1> घञाद्यन्ते धातुना साध्यक्रियायाः अभिधाने प्रमाणम्
<1-4-4-2> घञाद्यन्ते धातुना साध्यरूपफलस्यैव अभिधाने प्रमाणम्

एवं फलांशोऽपि धातुना असत्वावस्थापन्न एवोच्यते।

अत एव `स्तोकं पचति' इतिवत् `स्तोकं पाकः' इत्युपपद्यते इति ।। 14 ।।

एतदेव स्पष्टयति-

साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना।
सिद्धभावस्तु यस्तस्याः स घञादिनिबन्धनः ।। 15 ।।
</1-4-4-2>
<1-4-4-3> घञादिभिः सिद्धत्वेनाभिधाने प्रमाणम्

नच घञादिभिः सिद्धत्वेनाभिधाने मानाभावः, `पाकः' इत्युक्ते, भवति नष्टो वेत्याद्याकाङ्क्षोत्थापनस्यैव मानत्वात्,धातूपस्थाप्यायां तदसम्भवस्योक्तत्वात्, 'स्तोकः पाकः' इत्यनापत्तेश्च। तस्माद्धात्वर्थान्वये स्तोकादिशब्देभ्यो द्वितीया। घञर्थान्वये प्रथमा, पुँल्लिङ्गता चेति-तत्सिद्धये घञादेः शक्तिरुपेया। एतेन घञादीनां प्रयोगसाधुतामात्रमिति नैयायिकनव्योक्तमपास्तम्।

नच घञन्तशक्त्युपस्थाप्यान्वये `स्तोकः पाकः' इति भवतीति वाच्यम्, घञन्तानुपूर्व्याः शक्ततावच्छेदकत्वे गौरवादनुशासनाच्च घञादेरेव तथा शक्तिकल्पनादिति दिक्।

एवञ्च घञ्शक्त्यभिप्रायेण `कृदभिहितः' इति भाष्यम्, अतो न तद्विरोध इति भावः ।। 15 ।।
</1-4-4-3>
</1-4-4>
</1-4>
<1-5>कारकाणां भावनान्वयनियमप्रतिपादनम्
संबोधनाद्यष्टकस्य क्रिययैव साधुत्वमिति प्रतिपादनं च

ननु कारकाणां भावनान्वयनियम एव `पाकः' इत्यत्रापि कर्म्मषष्ठ्यनुसारेण भावनाया वाच्यत्वं सिद्ध्येत्। स एव कुत इत्याशङ्कां समाधत्ते-

सम्बोधनान्तं कृत्वोऽर्थाः कारकं प्रथमो वतिः।
धातुसम्बन्धाधिकारनिष्पन्नमसमस्तनञ् ।। 16 ।।
तथा यस्य च भावेन षष्ठी चेत्युदितं द्वयम्।
साधुत्वमष्टकस्यास्य क्रिययैवावधार्य्यताम्।। 17 ।।
<1-5-1> सम्बोधनान्तस्य क्रियायामन्वयः

सम्बोधनान्तस्य क्रियायामन्वयः, `त्वं ब्रूहि देवदत्त' इत्यादौ निघातानुरोधात्, "समानवाक्ये निघातयुष्मदस्मदादेशाः" इत्यनेन समानवाक्ये एव तन्नियमात्। उक्तञ्च वाक्यपदीये-

सम्बोधनपदं यच्च तत् क्रियायां विशेषणम्।
व्रजानि देवदत्तेति निघातोऽत्र तथा सति ।। इति ।।

`पचति भवति देवदत्तः' इत्यादौ तु सूत्रभाष्यादिरीत्यैकवाक्यतासत्त्वात् स्यादेव निघातः, "तिङ्ङतिङः (पा० सू० 7-1-88) इति सूत्रयता तिङन्तानामप्येकवाक्यतास्वीकारात्। `एकतिङ्वाक्यम्' इति वदतां वार्तिककाराणां मते परं न। वस्तुतस्तु `एकतिङ्विशेष्यकं वाक्यम्' इति तदभिप्रायस्य हेलाराजीयादौ, वैयाकरणभूषणेऽस्माभिश्च प्रतिपादितत्वात्तन्मतेऽपि भवत्येवेत्यवधेयम्।।
</1-5-1>
<1-5-2>कृत्वोऽर्थाः

कृत्वोऽर्थाः, "संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्" (पा० सू० 5-4-17) इति क्रियायोगे तत्साधुत्वोक्तेः, क्रियाया अभ्यावृत्तिः=पुनः पुनर्जन्म, तस्मिन् द्योत्ये इति तदर्थात्।
</1-5-2>
<1-5-3>कारकम्

कारकम्, `कारके' इत्यधिकृत्य तेषां व्युत्पादनात्। कारकशब्दो हि क्रियापरः, करोति कर्तृकर्म्मादिव्यपदेशानिति व्युत्पत्तेः। तथाचाग्रिमेष्वपादानादिसंज्ञाविधिषु क्रियाऽर्थककारकशब्दानुवृत्त्या क्रियान्वयिनामेव संज्ञेति भाष्ये स्पष्टम्।
</1-5-3>
<1-5-4>प्रथमो वतिः

प्रथमो वतिः, "तेन लुल्यं क्रिया चेद्वतिः" (पा० सू० 5-1-114) इति विहितः, तत्र यत्तुल्यं सा क्रिया चेदित्युक्तत्वात्।
</1-5-4>
<1-5-5>धातुसंबन्धाधिकारनिष्पन्नम्

धातुसम्बन्धाधिकारे, "धातुसम्बन्धे प्रत्यया:" (पा० सू० 3-4-1) इत्यधिकृत्य तेषां विधानात्।
</1-5-5>
<1-5-6>असमस्तनञ्

असमस्तनञ्-समासायोग्यः प्रसज्यप्रतिषेधीयो नञित्यर्थः, उत्तरपदार्थान्वयेऽपि समासविकल्पेन पक्षेऽसमस्तत्वाद् यथाश्रुतग्रहणायोगात्।

न चासमस्तनञः क्रियान्वये मानाभावः, न त्वं पचसि, न युवां पचथः, चैत्रो न पचति, घटो न जायते इत्यादौ क्रियाया एव निषेधप्रतीतेः। अत एव विद्यमानेऽपि घटे तादृशप्रयोगः।

तथा च `घटो नास्ति' इत्यत्राप्यस्तित्वाभाव एव बोध्यते। नहि घटो न जायते, नास्तीत्यनयोर्धात्वर्थभेदमन्तरेणास्ति विशेषः। तथाच `भूतले न घटः' इत्यत्राप्यस्तीत्यध्याहार्य्यम्, प्रकारतासम्बन्धेन नञर्थविशेष्यकबोधे धातुजन्यभावनोपस्थितेर्हेतुत्वस्य क्लृप्तत्वात्। शेषं नञर्थनिर्णये (निरूपणे) वक्ष्यते।। 16 ।।
</1-5-6>
<1-5-7> भावलक्षणसप्तमी
"यस्य च भावेन भावलक्षणम्" (पा० सू० 2-3-37) इत्यत्र भावनार्थकभावशब्देन तद्योगे साधुत्वाख्यानलाभात्।
</1-5-7>
<1-5-8>भावलक्षणषष्ठी
"षष्ठी चानादरे" ( पा० सू० 2-3-38) इति तदग्रिमसूत्रेऽपि चकाराद्यस्य च भावेनेत्यायातीत्यर्थः।
</1-5-8>
साधुत्वमिति-तत्स्वरूपं तु वक्ष्यते।

क्रिययैवेति-अयं भावः-भूवादिसूत्रादिषु प्रायशः क्रियाशब्देन भावनाव्यपदेशात्, तत्र तस्य साङ्केतिकी शक्तिः। फलांशे क्वाचित्कः क्रियत इति यौगिकः प्रयोगः। तथा च संज्ञाशब्दस्यानपेक्ष्य प्रवृत्तत्वेन बलवत्त्वाद् भावनान्वय एव साधुता लभ्यते। अत एव संज्ञाशब्दप्राबल्यात् `रथन्तरमुत्तराग्रन्थपठितऋक्ष्वेव गेयम्, नतु वेदे तदुत्तरपठ्यमानऋक्षु' इति नवमे निर्णीतम्।

किञ्च फलांशोऽपि भावनायां विशेषणम्, कारकाण्यपि क्वचित्तथाभूतानि, इति "गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात् स्यात्" (जै० सू० 3-1-22) इति न्यायेन सर्वे सेवका राजानमिव भावनायामेव परस्परनिरपेक्षाण्यन्वियन्ति। 'नहि भिश्रुको भिक्षुकान्तरं याचितुमर्हति सत्यन्यस्मिन्नभिक्षुके' इति न्यायेनापि फलं त्यक्त्वा भावनायामेवान्वियन्तीति मीमांसका अपि मन्वते। एवञ्च `विशेष्यतया कारकादिप्रकारबोधं प्रति धातुजन्यभावनोपस्थितिर्हेतुः' इति कार्य्यकारणभावस्य क्लृप्तत्वात्। यत्रापि `पक्ता' `पाचकः' इत्यादौ भावना गुणभूता, तत्रापि क्लृप्तकार्य्यकारणभावानुरोधात् तस्यामेवान्वय इत्यवसीयते, इत्यादि भूषणे प्रपञ्चितम्। केचितु भूतले घटः देवदत्तो घटमित्यादावन्वयबोधाकाङ्क्षनिवृत्त्योरदर्शनान्न तव्द्यतिरेकेण साधुत्वलाभ इत्याहुः ।। 17 ।।
</1-5>
<1-6>वतेः कारकस्य च क्रियाभिन्ने अन्वयमभ्युपगच्छतां नैयायिकानां खण्डनम्

स्वयमुपपत्तिमाह-

यदि पक्षेऽपि वत्यर्थः कारकञ्च नञादिषु।
अन्वेति त्यज्यतां तर्हि चतुर्थ्याः स्पृहिकल्पना ।। 18 ।।

`पर्वतो वह्निमान्, धूमात्, महानसवत्', भूतले न घटः `भूतले घटः' इत्यादिपादात्।

एवमादिष्वनुशासनविरोधेऽपि यदि साधुत्वमन्वयबोधश्चाभ्युपेयते तर्हि चतुर्थ्याः स्पृहिकल्पनाऽपि त्यज्यतामित्यर्थः। अनुशासनानुरोधतौल्ये अर्द्धजरतीयमयुक्तमिति भावः ।। 18 ।।
</1-6>
<1-7> कर्त्रादौ विहितानामिन्यादीनां क्रिययैवान्वयः

एवं कर्त्रादौ विहितानामिन्यादीनां क्रिययैवान्वय इत्याह-

अविग्रहा गतादिस्था यथा ग्रामादिकर्म्मभिः।
क्रिया सम्बध्यते तद्वत् कृतपूर्व्यादिषु स्थिता ।। 19 ।।

न विविच्य ग्रहः=ग्रहणं यस्याः सा अविग्रहा=गुणीभूतेति यावत्। यथा च `ग्रामं गतः' इत्यत्र क्तप्रत्ययार्थगुणीभूतापि क्रिया ग्रामादिकर्म्मभिः सम्बध्यते, तथा `कृतपूर्वी कटम्' इत्यत्रापि गुणभूता इन्यादिभिरित्यर्थः।

नच वृत्तिमात्रे समुदायशक्तेर्वक्ष्यमाणत्वात् तत्रान्तर्गता भावना पदार्थैकदेश इति कथं तत्रान्वय इति वाच्यम्, नित्यसापेक्षेष्वेकदेशेऽपि `देवदत्तस्य गुरुकुलम्', `चैत्रस्य नप्ता' इत्यादाविवान्वयाभ्युपगमात्। एवं भोक्तुं पाकः, भुक्तवा पाक इत्यत्रापि द्रष्टव्यम् ।। 19 ।।

</1-7>
<1-8>कृत्वोर्थेषु अतिप्रसङ्गाशङ्का समाधानं च

अतिप्रसङ्गमाशङ्कय समाधत्ते-

कृत्वोऽर्थाः क्तवातुमुन्वत्स्युरिति चेत् सन्ति हि क्वचित्।
अतिप्रसङ्गो नोद्भाव्योऽभिधानस्य समाश्रयात् ।। 20 ।।

`भोक्तुं पाकः' भुक्तवा पाक इत्यादौ, "तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्" (पा० सू० 3-3-10)
"समानकर्त्तृकयोः पूर्वकाले" (पा० सू० 3-4-21) इति क्रियावाचकोपपदे क्रिययोः पूर्वोत्तरकाले विधीयमाना अपि तुमुन्नादयो गुणभूतां तामादाय यथा जायन्ते, तथा कृत्वोऽर्था अपि स्युः। `एकः पाकः' इत्यत्र, "एकस्य सकृच्च" ( पा० सू० 5-4-19) द्वौ पाकौ, त्रयः, चत्वार इत्यत्र "द्वित्रिचतुर्भ्यः सुच्" (पा० सू० 5-4-18)। `पञ्च' इत्यत्र कृत्वसुच् स्यात्। तथाच `सकृत् पाकः' द्विस्त्रिश्चतुः पाका इत्याद्यापत्तिरिति चेदिष्टापत्तिः, "द्विर्वचनम्" इत्यादिदर्शनात्।

अतिप्रसङ्गस्त्वनभिधानान्नेत्याह-अतीति। "नहि वचिरन्तिपरः प्रयुज्यते" इत्याद्यभियुक्तोक्तरीत्या समाधेयमिति भावः।

केचित्तु-"सङ्ख्यायाः क्रियाभ्यावृत्तिगणने" इत्यत्र क्रियाग्रहणं व्यर्थम्, तस्या एवाभ्यावृत्तिसम्भवेन सामर्थ्यात्तल्लाभात्। तथाच साध्यमात्रस्वभावक्रियालाभाय तदिति वाच्यम्, नच `पाकः', इत्यादौ तादृशीति नातिप्रसङ्गः, द्विर्वचनमिति च `द्विःप्रयोगो द्विर्वचनम्' इति व्युत्पत्त्या, "द्विर्वचनेऽचि" (पा० सू०1-1-59) इति ज्ञापकं वा आश्रित्योपपादनीयमित्याहुः ।। 20 ।।
</1-8>

<1-9>शक्तत्व-साधुत्वयोः व्याप्य-व्यापकभावाभावप्रतिपादनम्

ननु सिद्धान्ते बोधकतारूपा शक्तिराख्यातशक्तिग्रहवतां बोधादावश्यकी, इति धातोरेव भावना वाच्या, नाऽऽख्यातस्येति कथं निर्णय इत्याशङ्कां समाधत्ते-

भेद्यभेदकसम्बन्धोपाधिभेदनिबन्धनम्।
साधुत्वं तदभावेऽपि बोधो नेह निवार्य्यते ।। 21 ।।

भेद्यम्=विशेष्यम्, भेदकम्=विशेषणं तयोर्यः सम्बन्धस्तस्य यो भेदस्तन्निबन्धनं साधुत्वम्। अयमर्थः-व्याकरणस्मृतिः शब्दसाधुत्वपरा तत्रैवावच्छेदकतया कल्प्यमानधर्म्मस्य शक्तित्वं वदतां मीमांसकानां पुनः शक्तत्वं साधुत्वमित्येकमेवेति तद्रीत्या विचारे साधुत्वनिर्णये एव शक्तिनिर्णय उच्यते।

अतिरिक्तशक्तिवादेऽप्याख्यातानामसाधुता भावनायां स्यादेव। एवञ्च चतुर्थ्यर्थे तृतीयाप्रयोगवद्धात्वर्थभावनायामाख्यातप्रयोगे, याज्ञे कर्मण्यसाधुशब्दप्रयोगात् `नानृतं वदेत्' इति निषेधोल्लङ्घनप्रयुक्तं प्रायश्चित्तं दर्शनान्तरीयव्युत्पत्तिमतां स्यादेवेति।

ननु त्वन्मते `नानृतम्' इति निषेधः क्रत्वर्थ एव न सिद्ध्येत्, आख्यातेन कर्तुरुक्तत्वाच्छ्रुत्या पुरुषार्थतैव स्यात्, प्रकारणाद्धि क्रत्वर्थता, तच्च श्रुतिविरोधे बाध्यते, इति चेन्न, `तिङर्थस्तु विशेषणम्' इत्यनेन परिहृतत्वात्। नहि गुणभूतः कर्ता निषेधं स्वाङ्गत्वेन ग्रहीतुमलम्। भावना तु प्रधानं तं ग्रहीतुं समर्थेति प्रकारणात् क्रत्वर्थतैव। अस्तु वा क्रतुयुक्तपुरुषधर्मः, अनुष्ठाने विशेषाभावात्। "जञ्जभ्यमानोऽनुब्रूयान्मयि दक्षक्रतू" इति वाक्योक्तमन्त्रविधिवदित्यादि भूषणे प्रपञ्चितम्।

नन्वाख्यातस्य भावनायामसाधुत्वे ततस्तब्दोधो न स्यात्, साधुत्वज्ञानस्य शाब्दबोधहेतुत्वात्, इत्यत आह-बोध इति-असाधुत्वेऽपि साधुत्वभ्रमाद् बोधोऽस्तु नाम, अपभ्रंशवत्। असाधुत्वन्तु स्यादेवेति भावः।

वस्तुतः साधुत्वज्ञानं न हेतुः, तद्व्यतिरेकनिर्णयोऽपि न प्रतिबन्धक इति `असाधुरनुमानेन' इत्यत्र वक्ष्यामः ।। 21 ।।
</1-9>
रङ्गोजिभट्टपुत्रेण कौण्डभट्टेन निर्म्मिते।
पूर्णो भूषणसारेऽस्मिन् धात्वाख्यातार्थनिर्णयः ।। 1 ।।

इति श्रीकोण्डभट्टविरचिते वैयाकरणभूषणसारे धात्वर्थाऽऽख्यातसामान्यार्थयोर्निरूपणम् ।। 1 ।।

</1-0>

# वैयाकरणभूषणसारः/लकारार्थनिर्णयः (कारिका २२-२३)

https://sa.wikisource.org/s/pae

< वैयाकरणभूषणसारः

<2-0> लकारार्थनिर्णयः

।। अथ लकारार्थनिर्णयः ।।

<2-1> टितामर्थविवरणम्

प्रत्येकं दशलकाराणामर्थं निरूपयति-

वर्तमाने परोऽक्षे श्वो भाविन्यर्थे भविष्यति।
विध्यादौ प्रार्थनादौ च क्रमाज्ज्ञेया लडादयः ।। 22 ।।

लडादयष्टितः षट् क्रमेणैष्वर्थेषु द्रष्टव्याः।

<2-1-1>लडर्थनिरूपणम्

तथाहि-वर्तमानेऽर्थे लट् "वर्तमाने लट्" (पा० सू० 3-1-183) इति सूत्रात्। प्रारब्धापरिसमाप्तत्वम्, भूतभविष्यद्भिन्नत्वं वा वर्तमानत्वम्। `पचति' इत्यादावधिश्रयणाद्यधःश्रयणान्ते मध्ये तदस्तीति भवति लट्प्रयोगः।

<2-1-1-1> आत्मास्तीत्यादौ वर्तमानतानिरूपणम्

आत्माऽस्ति पर्वताः सन्तीयादौ तत्तत्कालिकानां राज्ञां क्रियाया अनित्यत्वात्तद्विशिष्टस्योत्पत्त्यादिकमादाय वर्तमानत्वमूह्यम्। उक्तं हि भाष्ये-"इह भूतभविष्यद्वर्तमानानां राज्ञां क्रियास्तिष्ठतेरधिकारणम्" इति,

परतो भिद्यते सर्वमात्मा तु न विकम्पते।
पर्वतादिस्थितिस्तस्मात् पररूपेण भिद्यते।।

इति वाक्यपदीये च। एवम्, "तम आसीत्" "तुच्छेनाभ्यपिहितं यदासीत्" "अहमेकः प्रथममासम्, वर्त्तामि च, भविष्यामि च" इत्यादिश्रुतयोऽपि योज्याः।

</2-1-1-1>

<2-1-1-2> वर्तमानत्वस्य द्योत्यत्वं वाच्यत्वं वा

तच्च वर्त्तमानत्वादि लडादिभिर्द्योत्यते, क्रियासामान्यवाचकस्य तद्विशिष्टे लक्षणायां लडादेस्तात्पर्य्यग्राहकत्वेनोपयोगात्। अन्वयव्यतिरेकाभ्यां तद्रूपं लडादिवाच्यमेव। अन्यथा प्रत्ययानां
वाचकत्वविलोपापत्तिरित्यपि पक्षान्तरम्।

</2-1-1-2>

</2-1-1>

<2-1-2> लिडर्थः

लिडर्थमाह-परोक्षे इति-"परोक्षे लिट्" (पा० सू० 3-2-115) इति सूत्रात्। कालस्तावदद्यतनानद्यतनभेदेन द्विविधः। द्विविधोऽपि भूतभविष्यद्रूपः। तत्रानद्यतने भूते परोक्षे लिडित्यर्थः। तेनाद्यतने भूते, अनद्यतने भविष्यति, भूतेऽप्यपरोक्षे च न लिट्प्रयोगः। परोक्षत्वञ्च 'साक्षात्करोमि' इत्येतादृशविषयताशालिज्ञानाविषयत्वम्।

<2-1-2-1> परोक्षे इत्यस्य अव्यावर्तकत्वशङ्का-तन्निरासः

नच "क्रिया नामेयमत्यन्तापर(रि)दृष्टा पूर्वापरीभूतावयवा न शक्या पिण्डीभूता निदर्शयितुम्" इति भाष्यात् तस्या अतीन्द्रियत्वेन `परोक्षे' इत्यव्यावर्त्तकमिति शङ्क्यम्, पिण्डीभूताया निदर्शयितुमशक्यत्वेऽप्यवयवशः `साक्षात्करोमि' इति प्रतीतिविषयत्वसम्भवात्। अन्यथा `पश्य मृगो धावति' इत्यत्र तस्या दर्शनकर्मता न स्यादिति प्रतिभाति।

व्यापाराविष्टानां क्रियानुकूलसाधनानामेवात्र पारोक्ष्यं विवक्षितमतो नोक्तदोषः। `अयं पपाच' इत्याद्यनुरोधाद् व्यापाराविष्टानामित्यपि वदन्ति।
</2-1-2-1>
<2-1-2-2> स्वक्रियायाः स्वपारोक्ष्याभावशङ्का-तत्समाधानम् च

कथं तर्हि "व्यातेने किरणावलीमुदयनः" इति, स्वक्रियायाः स्वप्रत्यक्षत्वादिति चेत्, असङ्गतमेव, व्यासङ्गादिना स्वव्यापारस्य परोक्षत्वोपपादनेऽपि (बहुतरमनःप्रणिधानसाध्यशास्त्रार्थनिर्णयजनकशब्दरचनात्मके ग्रन्थे) अनद्यतनत्वातीतत्वयोर्विस्तारक्रियायामसत्त्वेन अनद्यतनातीत्वयोरभावेन तदर्थकलिडसम्भवात्।
</2-1-2-2>
</2-1-2>
<2-1-3> लुडर्थः

लुडर्थमाह-श्वो भाविनीति। अनद्यतने भाविनीत्यर्थः, "अनद्यतने लुट्" (पा० सू० 3-3-15) इति सूत्रात्। यथा "श्वो भविता" इत्यादौ।

</2-1-3>
<2-1-4> लृडर्थः

लृडर्थमाह-भविष्यतीति। भविष्यत्सामान्ये इत्यर्थः, "लृट् शेषे च" (पा० सू० 3-3-13) इति सूत्रात्। यथा "घटो भविष्यति" इत्यादौ। तत्त्वञ्च-वर्त्तमानप्रागभावप्रतियोगिसमयोत्पत्तिमत्त्वम्।

</2-1-4>
<2-1-5>
लेडर्थमाह-विध्यादाविति, "लिङर्थे लेट्" (पा० सू० 3-4-7) इति सूत्रात्। लिङर्थश्च विध्यादिरिति वक्ष्यते।
</2-1-5>

<2-1-6>लोडर्थः

लोडर्थमाह-प्रार्थनेति। आदिना विध्याद्याशिषो गृह्यन्ते, "आशिषि लिङ्लोटौ" (पा० सू० 3-3-173) "लोट् च" (पा० सू० 3-3-162) इति सूत्राभ्यां तथाऽवगमात्। यथा-`भवतु ते शिवप्रसादः' इत्यादौ। एतयोरर्थो लिङर्थ एव, त्रयाणां समानार्थत्वादिति तन्निर्णयेनैव निर्णयः ।। 22 ।।
</2-1-6>
</2-1>
<2-2> लङादीनामर्थः
लङादिक्रमेण ङितामर्थमाह-

ह्यो भूते प्रेरणादौ च भूतमात्रे लङादयः।
सत्यां क्रियातिपत्तौ च भूते भाविनि लृङ् स्मृतः ।। 23 ।।
<2-2-1> लङर्थः
लङर्थमाह-ह्यो भूत इति। अनद्यतने भूत इत्यर्थः, "अनद्यतने लङ्" (पा० सू० 3-1-111) इति सूत्रात्। यथा-'अस्य पुत्रोऽभवत्' इत्यादि।
</2-2-1>
<2-2-2>लिङर्थः
लिङर्थमाह-प्रेरणादाविति, "विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्" (पा० सू० 3-3-161) इति सूत्रात्। तत्र विधिः=प्रेरणम्, भृत्यादेर्निकृष्टस्य प्रवर्तनम्। निमन्त्रणम्=नियोगकरणम्,आवश्यके (श्राद्धभोजनादौ दौहित्रादेः प्रवर्तनम्) प्रेरणेत्यर्थः। आमन्त्रणम्=कामचारानुज्ञा। अधीष्टम्=सत्कारपूर्वको व्यापारः। सम्प्रश्नः=सम्प्रधारणम्।

एवच्चतुष्टयानुगतप्रवर्त्तनात्वेन वाच्यता, लाघवात्। उक्तञ्च--

अस्ति प्रवर्त्तनारूपमनुस्यूतं चतुर्ष्वपि।
तत्रैव लिङ् विधातव्यः किं भेदस्य विवक्षया।।
न्यायव्युत्पादनार्थं वा प्रपञ्चार्थमथापि वा।
विद्ध्यादीनामुपादानं चतुर्णामादितः कृतम्।। इति।

प्रवर्त्तनात्वञ्च-प्रवृत्तिजनकज्ञानविषयताऽवच्छेदकत्वम्।

तच्चेष्टसाधनत्वस्यास्तीति तदेव विध्यर्थः।
<2-2-2-1>कृतिसाध्यतादीनाम् लिङर्थतानिराकरणम्
यद्यप्येतत् कृतिसाध्यत्वस्यापि अस्ति, तज्ज्ञानस्यापि प्रवर्त्तकत्वात्, तथाऽपि यागादौ सर्वत्र तल्लोकत एव लभ्यत इत्यन्यलभ्यत्वान्न तच्छक्यम्।

बलवदनिष्टाननुबन्धित्वज्ञानञ्च न हेतुः, द्वेषाभावेनान्यथासिद्धत्वात्, आस्तिककामुकस्य नरकसाधनताज्ञानदशायामप्युत्कटेच्छया द्वेषाभावदशायां प्रवृत्तेर्व्यभिचाराच्च। तस्मादिष्टसाधनत्वमेव प्रवर्त्तना।
उक्तञ्च मण्डनमिश्रैः-

पुंसां नेष्टाभ्युपायत्वात् क्रियास्वन्यः प्रवर्त्तकः।
प्रवृत्तिहेतुं धर्म्मञ्च प्रवदन्ति प्रवर्त्तनाम् ।। इति।

प्रपञ्चितं चैतद् वैयाकरणभूषणे।
</2-2-2-1>
आदिना "हेतुहेतुमतोर्लिङ्" (पा० सू० 3-3-156) "आशिषि लिङ्लोटौ" (पा० सू० 3-3-173) इति सूत्रोक्ता हेतुहेतुमद्भावादयो गृह्यन्ते। "यो ब्राह्मणायावगुरेत्तं शतेन यातयेत्" इति यथा।
</2-2-2>
<2-2-3> लुङर्थः
लुङर्थमाह-भूतमात्र इति-भूतसामान्ये इत्यर्थः, भूते लुङ् (भूते इत्यधिकृत्य "लुङ्" (पा० सू० 3-2-110)) इति सूत्रात्। अत्र `विद्यमानध्वंसप्रतियोगित्वं भूतत्वम्'। तच्च क्रियायां निर्बाधमिति विद्यमानेऽपि घटे घटोऽभूदिति प्रयोगः। विद्यमानध्वंसप्रतियोगी घटाभिन्नाश्रयक उत्पत्त्याद्यनुकूलो व्यापार इति बोधः।
</2-2-3>
<2-2-4> कालविभागः
अयमत्र संग्रहः-कालो द्विविधः, अद्यतनोऽनद्यतनश्च। आद्यस्त्रिविधः, भूतभविष्यद्वर्त्तमानभेदात्। अन्त्यो द्विविधः-भूतो भविष्य(ष्यँ)श्च। तत्र वर्त्तमानत्वे लट्। भूतत्वमात्रे लुङ्। भविष्यत्तामात्रे लृट्। हेतुहेतुमद्भावाद्यधिकार्थविवक्षायामावयोर्लृङ्। अनद्यतने भूतत्वेन विवक्षिते लङ्। तत्रैव परोक्षत्वविवक्षायां लिट्। तत्सदृशे भविष्यति लुट्, इति द्रष्टव्यः।
</2-2-4>
<2-2-5> लृङर्थः
लृङर्थमाह-सत्यामिति-क्रियाया अतिपत्तिः=अनिष्पत्तिस्तस्यां गम्यमानायाम्, भूते भाविनि हेतुहेतुमद्भावे सति लृङित्यर्थः। "लिङ्निमित्ते लृङ् क्रियाऽतिपत्तौ" (पा० सू० 3-3-138) इति सूत्रात्। लिङो निमित्तं हेतुहेतुमद्भावादि। यथा-`सुवृष्टिश्चेदभविष्यत् सूभिक्षमभविष्यत्'। `वह्निश्चेत् प्राज्वलिष्यद् ओदनमपक्ष्यत्' इत्यादौ। अत्र वह्न्यभिन्नाऽऽश्रयकप्रज्वलनानुकूलव्यापाराभावप्रयोज्य-ओदनाभिन्नाश्रयकविक्लित्त्यनुकूलव्यापाराभाव इति शाब्दबोधः। एवंरीत्या द्रष्टव्यम्।
</2-2-5>
</2-2>
अयञ्च अर्थनिर्देश उपलक्षणम्, अर्थान्तरेऽपि बहुशो विधानदर्शनात्। प्रसिद्धत्वादेष्वेवार्थेषु शक्तिरन्यत्र लक्षणेति मतान्तररीत्या वोक्तम्। एतेषां क्रमनियामकश्चानुबन्धक्रम एव। अत एव पञ्चमो लकार इत्यनेन मीमांसकैर्लेट् व्यवह्रियत इति दिक् ।। 23 ।।
इति वैयाकरणभूषणसारे लकारविशेषार्थनिरूपणं समाप्तम् ।। 2 ।।
</2-0>

# वैयाकरणभूषणसारः/सुबर्थनिर्णयः (कारिका २४)

https://sa.wikisource.org/s/paf
< वैयाकरणभूषणसारः
<3-0>
अथ सुबर्थनिर्णयः
सुबर्थमाह-
आश्रयोऽवधिरुद्देश्यः सम्बन्धः शक्तिरेव वा।
यथायथं विभक्त्यर्थाः सुपां कर्मेति भाष्यतः ।। 24 ।।
<3-1>द्वितीयायाः आश्रयोऽर्थः
द्वितीया-तृतीया-सप्तमीनामाश्रयोऽर्थ। तथाहि-"कर्मणि द्वितीया" (पा० सू० 2-3-2)। तच्च कर्तुरीप्सिततमम्-क्रियाजन्यफलाश्रय इत्यर्थः, क्रियाजन्यफलवत्त्वेन कर्मण एव कर्तुरीप्सिततमत्वात्।

"तथायुक्तञ्चानीप्सितम्" (पा० सू० 1-4-50) इत्यादिसंग्रहाच्चैवमेव युक्तम्।ईप्सितानीप्सितत्वयोः शाब्दबोधे भानाभावेन संज्ञायामेव तदुपयोगः, नतु वाच्यकोटौ तत्प्रवेशः।
<3-1-1>आश्रयत्वं च अखण्डशक्तिरूपमवच्छेदकम्
तथाच क्रियायाः फलस्य च धातुनैव लाभादनन्यलभ्य आश्रय एवार्थः। तत्वञ्चाखण्डशक्तिरूपमवच्छेदकम्। `ओदनं पचति' इत्यत्र विक्लित्याश्रयत्वात् कर्म्मता।
</3-1-1>
<3-1-2> जानात्यादेरपि मुख्यसकर्मकत्वमेव
`घटं करोती'त्यत्र उत्पत्त्याश्रयत्वात्, उत्पत्तेर्धात्वर्थत्वात्। `जानाति' इत्यत्र आवरणभङ्गरूपधात्वर्थफलाऽऽश्रयत्वात्। अतीतानागतादिपरोक्षस्थलेऽपि ज्ञानजन्यस्य तस्याऽऽवश्यकत्वात्। अन्यथा `यथापूर्वं न जानामि' इत्यापत्तेः।
</3-1-2>
<3-1-3> अतीतादेरपि आश्रयत्वम्
अतीतादेराश्रयता च विषयतया ज्ञानाश्रयताया नैयायिकानामिव सत्कार्य्यवादसिद्धान्ताद्वोपपद्यते इति। उक्तञ्च-

तिरोभावाभ्युपगमे भावानां सैव नास्तिता।
लब्धक्रमे तिरोभावे नश्यतीति प्रतीयते।। इति।
</3-1-3>
<3-1-4> कर्तुरपादानस्य च कर्मसंज्ञापत्तिशङ्का-समाधानम् च
ननु `चैत्रो ग्रामं गच्छति' इत्यत्र ग्रामस्येव चैत्रस्यापि क्रियाजन्यग्रामसंयोगरूपफलाश्रयत्वात् कर्मताऽऽपत्तौ `चैत्रश्चैत्रं गच्छति' इत्यापत्तिः, प्रयागतः काशीं गच्छति चैत्रे `प्रयागं गच्छति' इत्यापत्तिश्च, क्रियाजन्यसंयोगस्य काश्यामिव विभागस्य प्रयागेऽपि सत्त्वात्, इति चेन्न, ग्रामस्येव चैत्रस्यापि फलाऽऽश्रयत्वेऽपि तदीयकर्तृसंज्ञया कर्म्मसंज्ञाया बाधेन `चैत्रश्चैत्रम्' इति प्रयोगासम्भवात्, द्वितीयोत्पत्तौ संज्ञाया एव नियामकत्वात्। अन्यथा `गमयति कृष्णं गोकुलम्' इत्यत्रेव `पाचयति कृष्णेन' इत्यत्रापि कृष्णपदाद् द्वितीयाऽऽपत्तेः।

शाब्दबोधः `चैत्रश्चैत्रम्' इत्यत्र स्यादिति चेन्न, तथाव्युत्पन्नामिष्टापत्तेः। उच्यतां वा `प्रकारतासम्बन्धेन धात्वर्थफलविशेष्यकबोधं प्रति धात्वर्थव्यापारानधिकरणाऽऽश्रयोपस्थितिर्हेतुः' इति कार्य्यकारणभावान्तरम्। प्रकृते चैत्रस्य व्यापारानधिकरणत्वाभावान्न दोषः। प्रयागस्य कर्मत्वन्तु सम्भावितमपि न, समभिव्याहृतधात्वर्थफलशालित्वस्यैव क्रियाजन्येत्यनेन विवक्षणस्य उक्तप्रायत्वात्।
<3-1-4-1>अत्र नैयायिकमतम्
नैयायिकास्त्वाद्यदोषवारणाय परसमवेतत्वम्, द्वितीयदोषवारणाय धात्वर्थताऽवच्छेदकत्वं फले विशेषणं द्वितीयावाच्यमित्युपाददते। परसमवेतत्वं धात्वर्थक्रियायामन्वेति, तथैव कार्यकारणभावान्तरकल्पनात्। परत्वञ्च द्वितीयया स्वप्रकृत्यर्थापेक्षया बोध्यते।

तथाच `चैत्रस्तण्डुलं पचति' इत्यादौ तण्डुलान्यसमवेतव्यापारजन्यधात्वर्थताऽवच्छेदकविक्लित्तिशालित्वात् तण्डुलस्य कर्म्मता। शाब्दबोधस्तु तण्डुलसमवेतधात्वर्थतावच्छेदकविक्लित्यनुकूलतण्डुलान्यसमवेतक्रियाजनककृतिमाँश्चैत्र इत्याहुः,
<3-1-4-1-1> नैयायिकमतखण्डनम्
तन्न रोचयामहे, परसमवेतत्वादेर्गौरवेणावाच्यत्वात्। अतिप्रसङ्गः किम् द्वितीयायाः, शाब्दबोधस्य वा? नाद्यः, तावद्वाच्यकथनेऽपि तत्तादवस्थ्यात्, `गमयति कृष्णं गोकुलम्' इतिवत् `पाचयति कृष्णं गोपः' इति द्वितीयाऽऽपत्तेः,`तण्डुलं पचति चैत्रः' इतिवत् `तण्डुलं पच्यते स्वयमेव' इत्यापत्तेश्च, विक्लित्यनुकूलतण्डुलान्यसमवेताग्निसंयोगरूपधात्वर्थाऽऽश्रयत्वात्। शाब्दबोधातिप्रसङ्गोऽप्युक्तरीत्यैव निरस्तः,

परसमवेतत्वस्य शक्यत्वेऽपि परत्वस्य, परसमवेतत्वस्य च इष्टान्वयलाभायानेकशः कार्य्यकारणभावाभ्युपगमे गौरवान्तरत्वादिति स्पष्टं भूषणे।
</3-1-4-1-1>
</3-1-4-1>
</3-1-4>
<3-1-5> कर्मणः सप्तधा विभागः
एतच्च सप्तविधम्--

निर्वर्त्यञ्च विकार्य्यञ्च प्राप्यञ्चेति त्रिधा मतम्।
तच्चेप्सिततमं कर्म्म चतुर्द्धाऽन्यत्तु कल्पितम्।।
औदासीन्येन यत् प्राप्यं यच्च कर्तुरनीप्सितम्।
संज्ञान्तरैरनाख्यातं यद्यच्चाप्यन्यपूर्वकम्।।

इति वाक्यपदीयात्।
यदसज्जायते सद्वा जन्मना यत्प्रकाशते।
तन्निर्वर्त्यं विकार्यं तु द्वेधा कर्म्म व्यवस्थितम्।।

प्रकृत्युच्छेदसम्भूतं किञ्चित् काष्ठादिभस्मवत्।
किञ्चिद्गुणान्तरोत्पत्त्या सुवर्णादिविकारवत्।।

क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते।
दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते।।

इति च तत्रैवोक्तम्।

`घटं करोति' इत्याद्यम्। `काष्ठं भस्म करोति' इति, `सुवर्णं कुण्डलं करोति' इति च द्वितीयम्। `घटं पश्यति' इति तृतीयम्। `तृणं स्पृशति' इत्युदासीनम्। `विषं भुङ्क्ते' इति द्वेष्यम्। `गां दोग्धि' इति संज्ञान्तरैनाख्यातम्।

`क्रूरमभिक्रुद्धयति' इत्यन्यपुर्वकम्।
</3-1-5>
</3-1>
<3-2> तृतीया
<3-2-1> कर्तृतृतीयाया आश्रयोऽर्थः
कर्तृतृतीयाया आश्रयोऽर्थः। तथाहि- "स्वतन्त्रः कर्ता" (पा० सू० 1-4-54) स्वातन्त्र्यञ्चधात्वर्थव्यापाराऽऽश्रयत्वम्।
<3-2-1-1> कर्तृलक्षणम्
धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते।

इति वाक्यपदीयात्। अत एव `यदा यदीयो व्यापारो धातुनाऽभिधीयते तदा स कर्ता' इति `स्थाली पचति' `अग्निः पचति' `एधांसि पचन्ति' `तण्डुलः पच्यते स्वयमेव' इत्यादि सङ्गच्छते।
</3-2-1-1>
<3-2-1-2> एकस्य एकदा संज्ञाद्वयस्य अयुक्तताप्रतिपादनम्
नन्वेवम् "कर्म्मकर्तृव्यपदेशाच्च" (ब्र० सू० 1-2-4) इति सूत्रे "मनोमयः प्राणशरीरः" इति वाक्यश्थमनोमयस्य जीवत्वे वाक्यशेषे तस्य "एवमितः प्रेत्याभिसम्भविताऽस्मि" इति प्राप्तिकर्म्मत्वकर्तृत्वव्यपदेशो विरुद्ध इति भगवता व्यासेन निर्णीतं कथं सङ्गच्छताम्? उच्यते- जीवस्यैव ज्ञेयत्वे प्राप्तिकर्म्मत्वमपि वाच्यम्, कर्तृत्वञ्च तस्य आख्यातेनोक्तम्। नचैकस्यैकदा संज्ञाद्वयं युक्तम्, कर्तृसंज्ञाया कर्म्मसंज्ञाया बाधात्। तथाच `एतम्' इति द्वितीया न स्यात्। कर्म्मकर्तृतायाञ्च यगाद्यापत्तिरिति शब्दविरोधद्वारा भवति स भेदहेतुः।
</3-2-1-2>
एवञ्च व्यापारंशस्य धातुलभ्यत्वादाश्रयमात्रं तृतीयार्थः।
</3-2-1>
<3-2-1-3> नैयायिककर्तृलक्षणनिरासः

कारकचक्रप्रयोक्तृत्वम्, कृत्याश्रयत्वं `दण्डः करोति' इत्यत्राव्याप्तम्।
</3-2-1-3>
<3-2-1-4> कर्तृभेदनिरूपणम्
अयञ्च त्रिवधः-सुद्धः, प्रयोजको हेतुः, कर्म्मकर्त्ता च। `मया हरिः सेव्यते' `कार्य्यते हरिणा' `गमयति कृष्णं गोकुलम्' मदभिन्नश्रयको हरिकर्म्मकसेवनानुकूलो व्यापारः, हर्य्यभिन्नश्रयक उत्पादनानुकूलो व्यापारः, गोकुलकर्मकगमनानुकूलकृष्णाश्रयकतादृशव्यापारानुकूलो व्यापार इति शाब्दबोधः।
</3-2-1-4>
</3-2-1>
<3-2-2> करणतृतीयार्थः
करणतृतीयायास्त्वाश्रयव्यापारौ वाच्यौ। तथाहि-"साधकतमं कारणम्" (पा० सू० 1-4-49)। तमबर्थः प्रकर्षः। स चाव्यवधानेन फलजनकव्यापारवत्ता।
<3-2-2-1> करणलक्षणम्
तादृशव्यापारवत्कारणञ्च कारणम्। उक्तञ्च वाक्यपदीये-

क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्।
विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम्।
वस्तुतस्तदनिर्देशयं न हि वस्तु व्यवस्थितम्।
स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः।। इति ।।

`विवक्ष्यते' इत्यनेन सकृदनेकेषां तदाभावाद् द्वितीयासप्तम्यादेरवकाशं सूचयति।
</3-2-2-1>
<3-2-2-2> कर्ता शास्त्रार्थेति उत्तरमीमांसाधिकरणविरोधपरिहारः
नचैवम् "कर्त्ता शास्त्रार्थवत्वात्" (ब्र० सू० 2-3-33) इत्युत्तरमीमांसाधिकरणे "शक्तिविपर्य्ययात्" इति सूत्रेणान्तःकरणस्य कर्तृत्वे करणशक्तिविपर्य्ययापत्तिरुक्ता न युज्येतेति वाच्यम्, "तदेवैतेषां प्राणानां विज्ञानेन विज्ञानमादाय" इति श्रुत्यन्तरे करणतया क्लृप्तस्य कर्तृतां प्रकल्प्य शक्तिविपर्य्ययापत्तिर्निष्प्रमाणा कल्प्येतेत्यभिप्रायात्।

वस्तुतस्तु अभ्युच्चयमात्रमेतदिति "यथा च तक्षोभयथा" (ब्र० सू० 2-3-40) इत्यधिकरणे भाष्य एव स्पष्टमित्यादि प्रपञ्चितं भूषणे।।
</3-2-2-2>
</3-2-2>
</3-2>
<3-3> सप्तम्यर्थः
सप्तम्या अप्याश्रयोऽर्थः। "सप्तम्यधिकरणे च" (पा० सू० 2-3-36) इत्यधिकरणे सप्तमी। तच्च "आधारोऽधिकरणम्" (पा० सू० 1-4-45) इति सूत्रादाधारः। तत्वञ्चाश्रयत्वम्। तत्राश्रयांशः शक्यः, तत्वमवच्छेदकम्। नचाश्रयत्वमात्रेण कर्मकर्तृकरणानामाधारसंज्ञा स्यात्, स्यादेव, यदि ताभिरस्या न बाधः स्यात्।
<3-3-1>कर्तृकर्मद्वारा क्रियाश्रयस्य सप्तम्यर्थता

"कारके" (पा० सू० 1-4-23) इत्यधिकृत्य विहितसप्तम्याः क्रियाश्रय इत्येव यद्यपि तात्पर्य्यम्, तथाप्यत्र च कर्तृकर्म्मद्वारा तदाश्रयत्वमस्त्येव(नचैवमपि साङ्कर्यमेव स्यादिति वाच्यम्, निरूपकभेदेन भेदात्। फलनिरूपिताधारो द्वितीयार्थः, व्यापारनिरूपितस्तु तृतीयार्थः, कर्तृकर्मव्यापारफलनिरूपितः सप्तम्यर्थः)स्थाल्यादेर्भूतलकटादेश्चेति, `स्थाल्यां पचति' `भूतले वसति' ` कटे शेते' इत्याद्युपपद्यते।
उक्तञ्च वाक्यपदीये-

कर्तृकर्मव्यवहितामसाक्षाद्धारयत् क्रियाम्।
उपकुर्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्।। इति।
</3-3-1>
<3-3-2>आधारस्य त्रैविध्यम्

एतच्च त्रिविधम् औपश्लेषिकम्, वैषयिकम्, अभिव्यापकञ्च। `कटे शेते' ` गुरौ वसति' `मोक्षे इच्छास्ति' `तिलेषु तैलम्' इति। एतच्च "संहितायाम्" (पा० सू० 6-1-72) इति सूत्रे भाष्ये स्पष्टम्।

</3-3-2>
</3-3>
<3-4>पञ्चम्यर्थः

अवधिः पञ्चम्यर्थः, "अपादाने पञ्चमी" (पा० सू० 2-3-29) इति सूत्रात्। तच्च "ध्रुवमपायेऽपादानम्" (पा० सू० 1-4-24) इति सूत्रात् अपायः=विश्लेषस्तज्जनकक्रिया, तत्रावधिभूतमपादानमित्यर्थकादवधिभूतमिति भावः।
<3-4-1>वाक्यपदीयदिशा अवधेः लक्षणम्

उक्तञ्च वाक्यपदीये-

अपाये यदुदासीनं चलं वा यदि वाऽचलम्।
ध्रुवमेवातदावेशात्तदपादानमुच्यते।।
पततो ध्रुव एवाश्वो यस्मादश्वात् पतत्यसौ।
तस्याप्यश्वस्य पतने कुडयादि ध्रुवमुच्यते।।
उभावप्यध्रुवौ मेषौ यद्यप्युभयकर्म्मजे (के)।
विभागे प्रविभक्ते तु क्रिये तत्र विवक्षिते (व्यवस्थिते)।।
मेषान्तरक्रियापेक्षमवधित्वं पृथक् पृथक्।
मेषयोः स्वक्रियापेक्षं कर्तृत्वञ्च पृथक् पृथक्।। इति।

अस्यार्थः-अपाये=विश्लेषहेतुक्रियायाम्, उदासीनाम्=अनाश्रयः, अतदावेशात्=तत्क्रियानाश्रयत्वात्। एवञ्च ` विश्लेषहेतुक्रियानाश्रयत्वे सति विश्लेषाश्रयत्वम्' फलितम्। `वृक्षात् पर्णं पतति' इत्यत्र पर्णस्य तद्वारणाय सत्यन्तम्।

`धावतोऽश्वात्, पतति' इत्यत्राश्वस्य क्रियाश्रयत्वाद्विश्लेषहेत्विति। ` कुडयात् पततोऽश्वात् पतति' इत्यत्राश्वस्य विश्लेषजनकक्रियाश्रयत्वेऽपि तन्न विरुद्धमित्याह-यस्मादश्वादिति। तद्वीश्लेषहेतुक्रियानाश्रयत्वे सतीति विशेषणीयमिति भावः। एवमश्वनिष्ठक्रियानाश्रयत्वात् कुडयादेरपि ध्रुवत्वमित्याह-तस्यापीति।

उभयकर्मजविभागस्थले विभागस्यैक्यात् तद्विश्लेषजनकक्रियानाश्रयत्वाभावात् ` परस्परान्मेषावपसरतः' इति न स्यादित्याशङ्कय समाधत्ते-उभावपीति। मेषान्तरेति-यथा निश्चलमेषादपसरद्द्वितीयमेषस्थले निश्चलमेषस्यापसरन्मेषक्रियामादाय ध्रुवत्वम्, तथात्रापि विभागैक्येऽपि क्रियाभेदादेकक्रियामादाय परस्य ध्रुवत्वमिति। तथाच ` विश्लेषाश्रयत्वे सति तज्जनकतत्क्रियानाश्रयत्वं तत्क्रियायामपादानत्वम्' वाच्यम्। क्रिया चात्र धात्वर्थः नतु स्पन्दः। तेन वृक्षकर्म्मजविभागवति वस्त्रे, `वृक्षाद् वस्त्रं पतति' इति सङ्गच्छते।
</3-4-1>
<3-4-2>पूर्वोक्तलक्षणस्य विभक्तिवाच्यत्वाभावबोधनम्
वस्तुतो नैतावत् पञ्चम्या वाच्यम्,किन्तु अवधेर्लक्षणमात्रम्, द्वितीयार्थोक्तरीत्या प्रयोगातिप्रसङ्गस्यासम्भवेन वाच्यकोटौ प्रवेशस्य गौरवेणासम्भवाद् इति तु प्रतीभाति। नचैवमपि `वृक्षात् स्यान्दते' इति स्यादिति शङ्कयम्, `आसनाच्चलितः' `राज्याच्चलितः' इतिवद् इष्टत्वात्। एतेन पञ्चमीजन्यापादानत्वबोधे सकर्मकधातुजन्योपस्थितेर्हेतुत्वमिति समाधानाभासोऽप्यपास्तः।

नचैवमपि `वृक्षात् त्यजति' इति दुर्वारम्, कर्मसंज्ञया अपादानसंज्ञायाः बाधेन पञ्चम्यसम्भवात्। भ्रमात् कृते तथा प्रयोगे यदि बोधाभावोऽनुभवसिद्धस्तर्हि पञ्चमीजन्यापादानत्वबोधे त्यजादिभिन्नधातुजन्यबुद्धेर्हेतुत्वं वाच्यम्। `बलाहकाद् विद्योतते' इत्यादौ निःसृत्येत्यध्याहार्य्यम्। `रूपं रसात् पृथक्' इत्यत्र तु
बुद्धिपरिकल्पितमपादानत्वं द्रष्टव्यम्, पृथग्विनेति पञ्चमी वा ।
</3-4-2>
<3-4-3>अपादानत्रैविध्यम्
इदञ्च-
निर्दिष्टविषयं किञ्चिदुपात्तविषयं तथा।
अपेक्षितक्रियञ्चेति त्रिधाऽपादानमुच्यते।।

इति वाक्यपदीयात् त्रिविधम्। `यत्र साक्षाद्धातुना गतिर्निर्दिश्यते तन्निर्दिष्टविषयम्'। यथा `अश्वात् पतति'। `यत्र धात्वन्तरार्थाङ्गं स्वार्थं धातुराह तदुपात्तविषयम्'। यथा-`बलाहकाद् विद्योतते'। निःसरणाङ्गे विद्योतने द्युतिर्वर्त्तते। अपेक्षिता क्रिया यत्र तदन्त्यम्। यथा-`कुतो भवान्' `पाटलिपुत्रात्'। अत्रगमनमर्थमध्याहृत्यान्वयः कार्य्यः।

</3-4-3>
</3-4>
<3-5>चतुर्थ्यर्थः

उद्देश्यश्चतुर्थ्यर्थः। तथाहि-`सम्प्रदाने चतुर्थी'(पा सू 2-3-13) तच्च "कर्मणा यमभिप्रैति स सम्प्रदानम्" (पा० सू० 1-4-32) इति सूत्रात् कर्मणा=करणभूतेन यमभिप्रैति=ईप्सति तत् कारकं सम्प्रदानमित्यर्थकादुद्देश्यम्।

इदमेव शेषित्वम्। तदुद्देश्यकेच्छाविषयत्वं च शेषत्वमित्येव पूर्वतन्त्रे निरूपितम्। अत एव "प्रासनवन्मैत्रावरुणाय दण्डप्रदानम्" (अ० 4 पा० 2 अ० 6)इत्यधिकरणे 'क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छति' इति विहितं दण्डदानं न प्रतिपत्तिः, किन्तु चतुर्थीश्रुत्यार्थकर्मेति तत्र निर्णीतम्। `रजकाय वस्त्रं ददाति' इत्यपि `खण्डिको पाध्यायः शिष्याय चपेटां ददाति' इति भाष्योदाहरणादिष्टमेव।

वृत्तिकारास्तु-सम्यक् प्रदीयते यस्मै तत् सम्प्रदानमित्यन्वर्थसंज्ञया स्वस्वत्वनिवृत्तिपर्यन्तमर्थं वर्णयन्तः `रजकस्य वस्त्रम्' इत्येवाहुः।
<3-5-1>सम्प्रदानत्रैविध्यम्
इदञ्च-

अनिराकरणात् कर्तुस्त्यागङ्गं कर्मणेप्सितम्।
प्रेरणानुमतिभ्यां च लभते सम्प्रदानताम्।।

इति वाक्यपदीयात् त्रिविधम्। "सूर्यायार्घ्यं ददाति" इत्याद्यम्। नात्र सूर्यः प्रार्थयते, नानुमन्यते, न निराकरोति। प्रेरकम्-"विप्राय गां ददाति"। अनुमन्तृ-"उपाध्यायाय गां ददाति"।
</3-5-1>
</3-5>
<3-6>विभक्तीनाम् धर्मिवाचकत्वव्यवस्थापनम्
अत्र सर्वत्र प्रकृतिप्रत्ययार्थयोरभेदः संसर्गः, विभक्तीनां धर्मिवाचकत्वात्, धर्ममात्रवाचकत्वे "कर्मणि द्वितीया" (पा० सू० 2-3-2) इति सूत्रस्वारसभङ्गापत्तेः, कर्मार्थककृत्तद्धितादौ तथादर्शनाच्च, द्वितीयाद्यर्थकबहुव्रीहौ `प्राप्तोदकः' इत्यादौ धर्मिवाचकत्वलाभाच्च।

सुपां कर्मादयोऽप्यर्थाः सङ्खया चैव तथा तिङाम्।

इति भाष्याच्चेति दिक्।
</3-6>
<3-7>विभक्तीनाम् धर्मवाचकत्वपक्षः
आश्रयस्यापि प्रकृत्यैव लाभान्न विभक्तिवाच्यता, किन्त्वाश्रयत्वमात्रं वाच्यम्। तदेव च
तादात्म्येनावच्छेदकम्। करणतृतीयायाश्च व्यापारोऽपि, पञ्चम्या विभागमात्रम्, चतुर्थ्या उद्देश्यत्वमात्रम्।

अत एवाकृत्यधिकरणमपि न विरुद्ध्यत इत्यभिप्रेत्याह- शक्तिरेव वेति। षण्णामपीति शेषः। "शेषे षष्ठी" (पा० सू० 2-3-50) इति सूत्रात् तस्याः सम्बन्धमात्रं वाच्यम्। कारकषष्ठयास्तु शक्तिरेवेत्यलम्।

"सप्तमीपञ्चम्यौ कारकमध्ये" (पा० सू० 2-3-7) इति सूत्रे `शक्तिः कारकम्' इति पक्षस्य भाष्ये दर्शनात्। एवञ्च `देवदत्तस्य गौर्ब्राह्मणाय गेहाद् गङ्गायां हस्तेन मया दीयते' इत्यत्र देवदत्तसम्बन्धिनी या गौस्तदभिन्नाश्रयकत्यागानुकूलो ब्राह्मणोद्देस्यको गेहनिष्ठविभागजनको गङ्गाधिकरणको हस्तकरणको मन्निष्ठो व्यापार इति बोधः।यथायथम्=उक्तप्रकारेण।
</3-7>
<3-8>विभक्तौ लक्षणायाः अनौचित्यम्
अत्र मानमुपदर्शयन् `घटं जानाति' इत्यादौ द्वितीयाया विषयतायां लक्षणेति बह्वाकुलं वदतो नैयायिकादीन् प्रत्याह-सूपां कर्मेति।

अयं भावः--

सुपां कर्मादयोऽप्यर्थाः संख्या चैव तथा तिङाम्।
प्रसिद्धो नियमस्तत्र नियमः प्रकृतेषु वा ।।

वार्त्तिकतद्भाष्याभ्यां कर्मादेर्वाच्यतायास्तन्नियमस्य च लाभः।

तथाहि-"स्वौजसमौट्" (पा० सू० 4-1-2) "कर्मणि द्वितीया" (पा० सू० 2-3-2) इति "द्वयोकयोर्द्विवचनैकवचने" (पा० सू० 1-4-22) इत्यादेः; (लः कर्मणिच) "लस्य" (पा० सू० 3-4-77) "तिप्तस्झि" (पा० सू० 3-4-79) "तान्येकवचनद्विवचन" (पा० सू० 1-4-101) इत्यादेरेकवाक्यतया कर्मादेस्तत्सङ्ख्यायाश्च वाच्यता लभ्यते। तथा तन्नियमश्च द्विविधो लभ्यते-द्वितीया कर्मण्येव, तृतीया करण एवेत्येवमादिः शब्दनियमः। कर्मणि द्वितीयैव, करणे तृतीयैवेत्येवमर्थनियमश्च। उभयथापि सिद्धनियमविरुद्धं लक्षणादिकमसाधुत्वप्रयोजकमिति याज्ञे कर्मणि "नानृतं वदेत्" इति निषेधविषयो भवत्येवेति स्वेच्छया लक्षणाऽपि विभक्तावप्रयोजिकैव। अत एव विभक्तौ न लक्षणा' इत्यादिर्नैयायिकवृद्धानां व्यवहार इति दिक् ।। 24 ।।
</3-8>
इति श्रीवैयाकरणभूषणसारे सुबर्थनिर्णयः ।। 3 ।।
</3-0>
************

# वैयाकरणभूषणसारः/नामार्थनिर्णयः (कारिका २५-२७)

https://sa.wikisource.org/s/pao
< वैयाकरणभूषणसारः
।। अथ नामार्थनिर्णयः ।।
<4-1>नामार्थविषयकविविधपक्षोपस्थापनम्
नामार्थमाह--

एकं द्विकं त्रिकं चाथ चतुष्कं पञ्चकं तथा।
नामार्थ इति सर्वेऽमी पक्षाः शास्त्रे निरूपिताः ।। 25 ।।
<4-1-1>एकं नामार्थः
<4-1-1-1>जातिः नामार्थः
एकम्=जातिः, लाघवेन तस्या एव वाच्यत्वौचित्यात्, अनेकव्यक्तीनां वाच्यत्वे गौरवात्।

नच व्याक्तीनामपि प्रत्येकमेकत्वाद्विनिगमनाविरहः, एवं हि एकस्यामेव व्यक्तौ शक्त्यभ्युपगमे व्यक्त्यन्तरे लक्षणायां स्वसमवेताश्रयत्वं संसर्ग इति गौरवम्,जात्या तु सहाश्रयत्वमेव संसर्ग इति लाघवम्।

किञ्चैवं विशिष्टवाच्यत्वमपेक्ष्य नागृहीतविशेषणन्यायाज्जातिरेव वाच्येति युक्तम्, व्यक्तिबोधस्तु लक्षणया। एवञ्च तत्र विभक्त्यर्थान्वयोऽप्युपपद्यते इति दिक्।
</4-1-1-1>
<4-1-1-2>व्यक्तिः नामार्थः
यद्वा, केवलव्यक्तिरेव एकशब्दार्थः, केवलव्यक्तिपक्षे एवाण्ग्रहणस्य, एकशेषस्य चारम्भेण तस्यापि शास्त्रसिद्धत्वात्। युक्तञ्चैतत्-व्यवहारेण व्यक्तावेव तद्ग्रहणात्। सम्बन्धितावच्छेदकस्य (सम्बन्धितावच्छेदिकायाः) जातेरैक्याच्छक्तिरप्येकैवेति न गौरवमपि।

नचैवं घटत्वमपि वाच्यं स्यात्, शक्यतावच्छेदकत्वात्, तथाच `नागृहीतविशेषण'न्यायात् तदेव वाच्यमस्त्विवति शङ्कयम्, अकारणत्वेऽपि कारणतावच्छेदकत्ववत्, अलक्ष्येऽपि लक्ष्यतावच्छेदकत्ववत्तथात्रापि सम्भवात्। उक्तञ्च--

आनन्त्येऽपि हि भावानामेकं कृत्वोपलक्षणम्।
शब्दः सुकरसम्बन्धो नच व्यभिचरिष्यति ।। इति ।
<4-1-1-3>भाष्यकाराशयः,
<4-1-2> द्विकं नामार्थः

वस्तुतस्तु "नह्याकृतिपदार्थतस्य द्रव्यं न पदार्थः" इति।

भाष्याद् विशिष्टं वाच्यम्।

`एकम्' इत्यस्य चायमभिप्रायः-शक्तिज्ञाने च विषयतयाऽवच्छेदिका जातिरेकैव। तथाच घटत्वविशिष्टबोधे घटत्वांशेऽन्याप्रकारकघटत्वशक्तिज्ञानत्वेन हेतुतेति कार्यकारणभाव इत्यादि प्रपञ्चितं भूषणे।
</4-1-1-3>
</4-1-1>

तदेतदभिप्रेत्याह-द्विकमिति-जाति-व्यक्ती इत्यर्थः। पूर्वपक्षाद् विरोधपरिहारः पूर्ववत्।
</4-1-2>
<4-1-3>

त्रिकमिति-जाति-व्यक्ति-लिङ्गानीत्यर्थः।
<4-1-3-1>शब्दशास्त्रीयं लिङ्गम्-तस्य शब्दनिष्ठत्वं च
सत्त्वरजस्तमोगुणानां साम्यावस्था नपुंसकत्वम्। आधिक्यं पुंस्त्वम्। अपचयः स्त्रीत्वम्। तत्तच्छब्दनिष्ठं तत्तच्छब्दवाच्यञ्च, तमेव

विरुद्धधर्ममादाय तटादिशब्दा भिद्यन्ते।

केषाञ्चिदनेकलिङ्गत्वव्यावहारस्तु समानानुपूर्वीकत्वेन शब्दानामभेदारोपात्।

एवञ्च पदार्थपदे पुँस्त्वमेव। व्यक्तिपदे स्त्रीत्वमेव। वस्तुपदे नपुंसकत्वमेव इति सर्वत्रैव `अयं पदार्थः' `इयं व्यक्तिः' `इदं वस्तु' इति व्यवहारः,`तटः' `तटी' 'तटम्' इति चोपपद्यते।
</4-1-3-1>
<4-1-3-2>लिङ्गस्य अर्थपरिच्छेदकत्वेन अन्वयः
तच्च लिङ्गमर्थपरिच्छेदकत्वेन अन्वेति, इति पश्वादिशब्दोक्तम्-`पशुः स्त्रियां नास्ति' इति, `पशुना' इत्यादिविधिर्न छाग्यादीनङ्गत्वेन प्रयोजयतीति विभावनीयम्। नच व्यक्त्यादिशब्दोक्तलिङ्गस्येव पश्वादिशब्दोक्तस्यापि साधारण्यं शङ्क्यम्, व्यक्तिशब्दस्य नित्यस्त्रीलिङ्गत्वेन तथा सम्भवेऽपि पशुशब्दस्य नित्यपुंल्लिङ्गत्वे प्रमाणाभावात्।

`पश्वा न तायुं गुहा चरन्तम्' (ऋ० वे० म० 1 अनु० 12 सू० 65)।

"पश्वे नृभ्यो यथा गवे" (ऋ० वे० अ० 1 अ० 3 व० 26) इत्यादि वेदे दर्शनाच्च, मीमांसायां चतुर्थे "पशुना यजेत' इत्यत्रैकत्व-पुँस्त्वयोर्विवक्षितत्वान्नानेकपशुभिः, पशुस्त्रिया वा याग इति प्रतिपादितत्वाच्च।

वस्तुतस्तु विशेषविध्यभावे उप्रत्ययान्तानां पुँस्त्वस्य व्याकरणेन निर्णितत्वाद् वेदभाष्येऽपि जसादिषु छन्दसि वा वचनम्' इति नाभावाभाव इत्युक्तेः पशुशब्दस्य नित्यपुँस्त्वनिर्णयात्। प्रकृते "छागो वा मन्त्रवर्णात्" इति न्यायेनैव निर्णयः। मन्त्रवर्णे हि `छागस्य वपाया मेदसः' इति श्रूयते। तत्र छागस्येति छाग्यामसम्भावितम्, इति भवति ततः पुंस्त्वनिर्णय इति विस्तरेण प्रपञ्चितं भूषणे।
</4-1-3-2>
</4-1-3>
<4-1-4>चतुष्कं प्रातिपदिकार्थः
चतुष्कम्-सङ्खयासहितं त्रिकमित्यर्थः।
<4-1-5>पञ्चकं प्रातिपदिकार्थः
पञ्चकम्-कारकसहितं चतुष्कमित्यर्थः।

नन्वन्वय-व्यतिरेकाभ्यां प्रत्ययस्यैव तद्वाच्यम्, तत एव लिङ्गादीनामुपस्थितौ प्रकृतिवाच्यत्वे मानाभावाच्चेति चेत्, सत्यम्, प्रत्ययवर्जिते `दधि पश्य' इत्यादौ प्रत्ययमजानतोऽपि बोधात् प्रकृतेरेव वाचकत्वं कल्प्यते, लिङ्गानुशासनस्य प्रकृतेरेव दर्शनाच्च।

अत एवैषु पक्षेषु न निर्बन्धः (प्रत्ययस्यौव वाचकताया युक्तत्वात्)।

`द्योतिका वाचिका वा स्युर्द्वित्वादीनां विभक्तयः'।

इति वाक्यपदीयेऽपि पक्षद्वयस्य व्युत्पादनात्।

शास्त्र इति-बहुषु स्थलेषु व्युत्पादनं व्यञ्जयितुम्, प्राधान्येन तु सरूपसूत्रादौ व्यक्तम् ।। 25 ।।
</4-1-4>
</4-1-5>
<4-1-6>षट्कं प्रातिपदिकार्थः-शब्दोपि प्रातिपदिकार्थः
शब्दस्तावच्छाब्दबोधे भासते,

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते।।

इत्याद्यभियुक्तोक्तेः।

`विष्णुमुच्चारय' इत्यादावर्थोच्चारणासम्भवेन, विना शब्दविषयं शाब्दबोधासङ्गतिश्चेति सोऽपि प्रातिपदिकार्थः।

नच लक्षणया निर्वाहः, निरूढलक्षणायाः शक्त्यनतिरेकात्, `जबगडदशमुच्चारय' इत्यादौ शक्याग्रहेण शक्यसम्बन्धरूपलक्षणाया अग्रहाच्च।

अज्ञातायाश्च वृत्तेरनुपयोगात्, ` गावमुच्चारय' इति भाषाशब्दानामनुकरणे साधुतासम्प्रतिपत्तेः, तेषां शक्त्यभावेन परनये लक्षणाया असम्भवाच्चेत्यभिप्रेत्य षोढाऽपि क्वचित् प्रातिपदिकार्थ इत्याह-

शब्दोऽपि यदि भेदेन विवक्षा स्यात् तदा तथा।
नोचेच्छ्रोत्रादिभिः सिद्धोऽप्यसावर्थो व भासते ।। 26 ।।

यद्यनुकार्यानुकरणयोर्भेदविवक्षा तदा शब्दोऽपि प्रातिपदिकार्थः। यदि न भेदविवक्षा, तदा श्रोत्रादिभिरुपस्थितोऽप्यर्थवद् भासते। अपिर्हेतौ, उपस्थितत्वाद्भासते इत्यर्थः। अयं भावः-अनुकार्यानुकरणयोर्भेदेऽनुकार्यस्य पदानुपस्थितत्वात्, तत्सिद्धये शक्तिरुपेया, अभेदे प्रत्यक्षे विषयस्य हेतुत्वात् स्वप्रत्यक्षरूपां पदजन्योपस्थितिमादाय शाब्दबोधविषयतोपपत्तिरिति।

यद्यप्यतिप्रसङ्गवारणाय वृत्तिजन्यपदोपस्थितिरेव हेतुः, तथाप्यत्राश्रयतया वृत्तिमत्त्वस्य सत्त्वान्नानुपपत्तिः। निरूपकताऽऽश्रयताऽन्यतरसम्बन्धेन वृत्तिमत एव शाब्दबोधविषयत्वं कल्प्यते इत्यनवद्यम्, सम्बन्धस्योभयनिरूप्यत्वात्, पदादर्थस्येव तद्बोधकत्वेन स्वस्यापि ज्ञानसम्भवाच्चेति।

उक्तञ्च वाक्यपदीये--

ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तेजसो यथा।
तथैव सर्वशब्दानामेते पृथगवस्थिते।। इति,

विषयत्वमनादृत्य शब्दैर्नार्थः प्रकाश्यते। इति चेति।
<4-1-6-1>अनुकार्यानुकरणयोरभेदः
प्रसङ्गादनुकार्य्यानुकरणयोरभेदपक्षे साधकमाह-

अत एव गावित्याह भू सत्तायामितीदृशम्।
न प्रातिपदिकं नापि पदं साधु तु तत् स्मृतम् ।। 27 ।।

`गवित्ययमाह' `भू सत्तायाम्' इत्येवमादयो यतोऽनुकरणशब्दा अनुकार्य्यान्न भिद्यन्ते। अतस्तेषामर्थवत्त्वाभावात् ` अर्थवदधातुः' (पा० सू० 1-4-42) इत्याद्यप्रवृत्तौ न प्रातिपदिकत्वम्, नापि पदत्वम्, अथ च साधुत्वमित्युपपद्यते। अन्यथा `प्रत्ययः' (पा० सू० 3-1-1) `परश्च' (पा० सू० 3-1-2) `अपदं न प्रयुञ्जीत' इति निषेधादिलङ्घनादसाधुतापत्तिरित्यर्थः ।। 27 ।।
</4-1-6-1>
</4-1-6>
</4-1>
इति श्रीमद्रङ्गोजिभट्टात्मजकौण्डभट्टकृते वैयाकरणभूषणसारे नामार्थनिर्णयः ।। 4 ।।

# वैयाकरणभूषणसारः/समासशक्तिनिर्णयः (कारिका २८-३६)


< वैयाकरणभूषणसारः
अथ समासशक्तिनिर्णयः
<5-1> समासविभागः

सामासान् विभजते--

सुपां सुपा तिङा नाम्ना धातुनाऽथ तिङां तिङा।
सुबन्तेनेति विज्ञेयः समासः षड्विधो बुधैः ।। 28 ।।

सुपां सुपा-पदद्वयमपि सुबन्तम् `राजपुरुषः' इत्यादिः।
सुपां तिङा-पूर्वपदं सुबन्तं उत्तरपदं तिङन्तम् `पर्य्यभूषयत्' `अनुव्यचलत्'। `गतिमतोदात्तवता तिङाऽपि समासः' इति वार्त्तिकात् समासः।
सुपां नाम्ना-`कुम्भकारः' इत्यादिः। `उपपदमतिङ्' (पा० सू० 2-2-19) इति समासः। स च "गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' इति परिभाषया भवति सुबुत्पत्तेः पाक्, अत्रोत्तरपदे सुबुत्पत्तेः प्रागित्यर्थात्। अन्यथा `चर्म्मक्रीती' इत्यादौ नलोपानापत्तेः।
सुपां धातुना-उत्तरपदं धातुमात्रम्, न तिङन्तम्, `कटप्रुः' `आयतस्तूः' "क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घश्च" इति वार्त्तिकात्।
तिङां तिङा-`पिबतखादता' `पचतभृज्जता' इत्यादिः, "आख्यातमाख्यातेन क्रियासातत्ये" इति मयूरव्यंसकाद्यन्तर्गणसूत्रात्।
तिङां सुबन्तेन-पूर्वपदं तिङन्तमुत्तरं सुबन्तम्-`जहिस्तम्बः', "जहि कर्म्मणा बहुलमाभीक्ष्ण्ये कर्त्तारञ्चाभिदधाति' इति मयूरव्यंसकाद्यन्तगणसूत्रात्।

अयं षड्विधोऽपि समासः "सह सुपा" (पा० सू० 2-1-4) इत्यत्र योगविभागेन भाष्ये व्युत्पादितः, स्पष्टः शब्दकौस्तुभादौ ।। 28 ।।
<5-2> पूर्वपदार्थप्रधानेत्यादिलक्षणानां प्रायिकत्वम्
स्वयं भाष्यादिसिद्धं तद्भेदं व्युत्पाद्य प्राचीनवैयाकरणोक्तविभागस्याव्याप्त्यतिव्याप्त्यादिभिस्तल्लक्षणस्य च प्रायिकत्वं दर्शयति--

समासस्तु चतुर्द्धेति प्रायोवादस्तथा परः।
योऽयं पूर्वपदार्थादिप्राधान्यविषयः स च ।। 29 ।।
भौतपूर्व्यात् सोऽपि रेखागवयादिवदास्थितः ।। 29 1/2 ।।

चतुर्धा, अव्ययीभाव-तत्पुरुष-द्वन्द्व-बहुव्रीहिभेदात्। अयं प्रायोवादः, `भूतपूर्वः', `दृन्भूः', (`काराभूः') `आयतस्तूः', `वागर्थाविव' इत्याद्यसङ्ग्रहात्।

तथा पूर्वपदार्थप्रधानोऽव्ययीभावः। उत्तरपदार्थप्रधानस्तत्पुरुषः। उभयपदार्थप्रधानो द्वन्द्वः। अन्यपदार्थप्रधानो बहुव्रीहिरित्यादिलक्षणमपि प्रायिकम्, `उन्मत्तगङ्गम्' `सूपप्रति' `अर्द्धपिप्पली' 'द्वित्राः' `शशकुशपलाशम्' इत्यादौ परस्परव्यभिचारात्। तथाहि-`उन्मत्तगङ्गम्' इत्यव्ययीभावे पूर्वपदार्थप्राधान्याभावादव्याप्तिः, अन्यपदार्थप्राधान्याद् बहुव्रीहिलक्षणातिव्याप्तिश्च, "अन्यपदार्थे च संज्ञायाम्" (पा० सू० 2-1-21) इति समासात्। `सूपप्रति' इत्यव्ययीभावे उत्तरपदार्थप्राधान्यात्तत्पुरुषलक्षणातिव्याप्तिः, अव्ययीभावाव्याप्तिश्च। `सुप् प्रतिना मात्रार्थे' (पा० सू० 2-1-9) इति समासात्। `अर्द्धपिप्पली' इति तत्पुरुषे पूर्वपदार्थप्राधान्यसत्त्वाद् अव्ययीमावातिव्याप्तिः, तत्पुरुषाव्याप्तिश्च, " अर्द्धं नपुंसकम्" (पा० सू० 2-2-2) इति समासात्।

एवम् `पूर्वकायः' इत्यादौ द्रष्टव्यम्। `द्वित्राः' इति बहुव्रीहावुभयपदार्थप्राधान्याद्, द्वन्द्वातिव्याप्तिः, बहुव्रीह्यव्याप्तिश्च। ` शशकुशपलाशम्' इत्यादिद्वन्द्वे समाहारान्यपदार्थप्राधान्याद् बहुव्रीह्यतिव्याप्तिः, द्वन्द्वातिव्याप्तिः, स्यादिति भावः।

सिद्धान्ते तु `अव्ययीभावाधिकारपठितत्वमव्ययीभावत्वम्' इत्यादि द्रष्टव्यम्। असम्भवश्चैषामित्याह-भौतपूर्व्यादित्यादि-रेखागवयादिनिष्ठलाङ्गूलादेर्वास्तवपश्चलक्षणत्ववदेतेषामपि न समासलक्षणत्वम्। बोधकता तु तद्वदेव स्यादिति भावः ।। 29 1/2 ।।
<5-3> अजहत्स्वार्थापक्षे पूर्वपदार्थप्राधान्यादिव्यवस्था सम्भविनीति शङ्कायाः उत्तरम्
ननु पूर्वपदार्थप्राधान्यादि समासे सुवचम्। तथाहि-`समर्थः पदविधिः' इति सूत्रे भाष्यकारैरनेकधोक्तेष्वपि पक्षेषु

जहत्स्वार्थाऽजहत्स्वार्थपक्षयोरेवैकार्थीभाव-व्यपेक्षारूपयोः पर्य्यवसानं लभ्यते। तत्राजहत्स्वार्थापक्षे उक्तव्यवस्था नासम्भविनीत्याशङ्कां मनसिकृत्य आह--

<5-3-1> जहत्स्वार्थाजहत्स्वार्थयोः निरूपणम्
जहत्स्वार्थाजहत्स्वार्थे द्वे वृत्ती ते पुनस्त्रिधा ।। 30 ।।
भेदः संसर्ग उभयं चेति वाच्यब्यवस्थितेः ।। 30 1/2 ।।

जहति पदाति स्वार्थं यस्यां सा जहत्स्वार्था। पदे वर्णवद् वृत्तौ पदानामानर्थक्यमित्यर्थः। अयं भावः-समासशक्त्यैव राजविशिष्टपुरुषभान (बोध) सम्भवे न राजपुरुषपदयोरपि पुनस्तद्बोधकत्वं कल्प्यम्, वृषभयावकादिपदेषु वृषादिपदानामिव।

अन्यथा राजपदेन विग्रहवाक्य इव, राज्ञः स्वातन्त्र्येणोस्थितिसत्त्वात्, `ऋद्धस्य राज्ञः पुरुष' इत्यत्रेव `ऋद्धस्य राजपुरुषः' इत्यस्याप्यापत्तेरिति।

अजहदिति-न जहति पदानि स्वार्थं यस्यां सा अजहत्स्वार्था।
<5-3-2> व्यपेक्षापक्षनिरूपणम्
अयमभिप्रायः-राजपुरुषादिसमासादौ नातिरिक्ता शक्तिः, कल्पकाभावात्, क्लृप्तराजादिपदादेवार्थोपस्थितिसम्भवे लत्कल्पनस्य गौरवपराहतत्वाच्च। कलृप्तशक्तित्यागोऽप्यप्रामाणिकः कल्प्येत। तथाचाऽऽकाङ्क्षादिवशात् कलृप्तशक्त्यैव विशिष्टार्थबोधः।
अयमेव व्यपेक्षापक्षो मतान्तरत्वेन भाष्यकारैरुक्तः।
नचात्र मते समासे `ऋद्धस्य' इति विशेषणान्वयापत्तिः, "सविशेषणानां वृत्तिर्न, वृत्तस्य वा विशेषणयोगो न" इति वार्त्तिकात्। तथाचैतन्मतवादिनां पूर्वोत्तरपदार्थसत्त्वाद् पूर्वपदार्थप्रधान इत्यादिव्यवस्था सूपपदेति भावः।
<5-3-3> एकैकस्यापि वृत्तेः त्रैविध्यम्
प्रसङ्गाद् वृत्तिभेदमपि निरूपयति-ते पुनरिति-द्वे अपि वृत्ती त्रिविधे, वाच्यत्रैविध्यात्। वाच्यमेवाह-भेद इत्यादि। भेदः=अन्योन्याभावः। तथाच `राजपुरुषः' इत्यादावराजकीयभिन्न इति बोधः। अस्यावाच्यत्वे च `राजपुरुषः सुन्दरः' इतिवत्, राजपुरुषो देवदत्तस्य' चेत्यपि स्यात्। वाच्यत्वे तद्विरोधान्नैवं प्रयोग इति भावः।

`राजसम्बन्धवान्' इत्येव शाब्दं भानम्, भेदस्तूत्तरकालमुपतिष्ठते इत्याशयेनाह-संसर्ग इति। विनिगमनाविरहम्, अस्वामिकेऽपि `राजपुरुषः' इत्यादिप्रयोगापत्तिञ्च मनसि कृत्वोभयं वाच्यमित्याह-अभयं वेति। तथाच `अराजकीयभिन्नो राजसम्बन्धवाँश्चायम्' इति बोधः ।। 30 1/2 ।।
<5-3-4>व्यपेक्षारूपवाक्यशक्त्यपेक्षया समासशक्तेः वैलक्षण्यप्रतिपादनम्
व्यपेक्षावादस्यैवं युक्तिभाष्यविरुद्धत्वात् तन्मूलकः `पूर्वपदार्थप्रधानः' इत्याद्युत्सर्गोऽप्ययुक्तः। किन्तु `रेखागवय' न्यायेनोऽत्सर्गोऽपि परम्परयैव बोधक इत्याशयेन समाधत्ते--

समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत् ।। 31 ।।
बहूनां वृत्तिधर्म्माणां वचनैरेव साधने।
स्यान्महद् गौरवं तस्मादेकार्थीभाव आश्रितः ।। 32 ।।

समास इति-वृत्तिमात्रोपलक्षणम्, "समर्थः" पदविधिः" (पा० सू० 2-1-1) इत्यत्र पदमुद्दिश्य यो विधीयते-समासादिः स समर्थः-विग्रहवाक्यार्थाभिधाने शक्तः सन् साधुरिति सूत्रार्थस्य भाष्याल्लाभात्।
<5-3-5> पदोद्देश्कविधित्वस्य पञ्चस्वपि वृत्तिषु प्रतिपादनम्

पदोद्देश्यकविधित्वञ्च-कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपासु पञ्चस्वपि वृत्तिष्वस्त्येव।
<5-3-6> व्यपेक्षावादखण्डनम्
विशिष्टशक्तयस्वीकर्तॄणां व्यपेक्षावादिनां मते दूषणं शक्तिसाधकमेवेत्याशयेनाह-पङ्कजशब्दवदिति-पङ्कजनिकर्तुरपि योगादेवोपस्थितौ तत्रापि समुदायशक्तिर्न सिद्ध्येत्।
नच पद्मत्वरूपेणोपस्थितये सा कल्प्यत इति वाच्यम्, चित्रग्वादिपदेऽपि स्वामित्वेनोपस्थितये तत्कल्पनाऽऽवश्यकत्वात्। लक्षणयैव तथोपस्थितिरिति चेत्, पङ्कजपदेऽपि सा सुवचा। एवं रथकारपदेऽपि। तथाच "वर्षासु रथकारोऽग्निमादधीत" इत्यत्रापि विना लक्षणां क्लृप्तयोगेन ब्राह्मणादिविषयतयैवोपपत्तौ तत्कल्पनां कृत्वा जातिविशेषस्याधिकारित्वं प्रकल्प्यापूर्वविद्याकल्पनमयुक्तं स्यादिति भावः।
<5-3-6-1> व्यपेक्षापक्षे गौरवप्रदर्शनम्
<5-3-6-1-1>बहूनां वृत्तिधर्माणां वचनैः साधनीयत्वम्
साधकान्तरमाह-बहूनामिति-वृत्तेर्धर्म्माः विशेषणलिङ्गसङ्ख्याद्ययोगादयस्तेषां वचनैः (एव) साधने गौरवमित्यर्थः।

अयं भावः। विशिष्टशक्तयस्वीकारे `राज्ञः पुरुषः' इत्यत्रेव `राजपुरुषः' इत्यत्रापि स्याद् विशेषणाद्यन्वयः, राजपदेन स्वतन्त्रोपस्थितिसत्त्वात्। विभाषावचनञ्च समासनियमवारणाय कार्य्यमिति।

ननु "सविशेषणानाम्" इति वचनान्न विशेषणाद्यन्वयः, विभाषावचनञ्च कृतमेवेत्याशङ्कां समाधत्ते-वचनैरेवेति। न्यायसिद्धमेव सूत्रम्। व्यापेक्षाविवक्षायां (व्यासस्य) वाक्यस्य, एकार्थीभावे समासस्येति स्वभावादेव प्रयोगनियमसम्भवात्। सविशेषणेत्यपि विशिष्टशक्तौ राज्ञः पदार्थैकदेशतयाऽन्वयासम्भवान्न्यायसिद्धमिति भावः।

अत एव व्यपेक्षापक्षमुद्भाव्य "अथैतस्मिन् व्यपेक्षायां सामर्थ्ये योऽसावेकार्थीभावकृतो विशेषः स वक्तव्यः" इति भाष्यकारेण दूषणमप्युक्तम् ।। 32 ।।

तथा `धवखदिरौ' ` निष्कौशाम्बिः' `गोरथः' `घृतघटः' `गुडधानाः' `केशचूडः' `सुवर्णालङ्कारः' `द्विदशाः' `सप्तपर्णाः' इत्यादावितरेतरयोग-निष्क्रान्त-युक्त-पूर्ण-मिश्र-सङ्घात-विकार-सुचप्रत्ययलोप-वीप्साद्यर्थो वाचनिको वाच्य इत्यतिगौरवं स्यादिति दूषणान्तरमाह--

चकारादिनिषेधोऽथ बहुव्युत्पत्तिभञ्जनम्।
कर्तव्यं ते न्यायसिद्धं त्वस्माकं तदिति स्थितिः ।। 33 ।।

आदिना घनश्यामः' `हंसगमनः' इत्यादाविवादीनां पूर्वोक्तानाञ्च संग्रहः।
</5-3-6-1-1>
<5-3-6-1-2> बहूनां व्युत्पत्तीनां भञ्जनम्

दूषणान्तरमाह-बहुव्युत्पत्तिभञ्जनमिति।
अयमाशयः- `चित्रगुः' इत्यत्र स्वाम्यादिप्रतीतिरनुभवसिद्धा। नच तत्र लक्षणा, `प्राप्तोदको ग्रामः' इत्यादौ तदसम्भवात्, `प्राप्तकर्त्रभिन्नमुदकम्' इत्यादिबोधोत्तरं तत्सम्बन्धिग्रामलक्षणायामपि `उदककर्तृकप्राप्तिकर्म्म ग्रामः' इत्यर्थालाभात्।
प्राप्तेति क्तप्रत्ययस्यैव कर्त्रर्थकस्य कर्मणि लक्षणेति चेत्तर्हि समानाधिकरणप्रातिपदिकार्थयोरभेदान्वयव्युत्पत्तेरुदकाभिन्नप्राप्तिकर्म्मेति स्यात्, अन्यथा समानाधिकरणप्रातिपदिकार्थयोरभेदान्वयव्युत्पत्तिभङ्गापत्तेः, प्राप्तेर्धात्वर्थतया कर्तृतासम्बन्धेन भेदेनोदकस्य तत्रान्वयासम्भवाच्च। अन्यथा `देवदत्तः पच्यते' इत्यत्र कर्तृतासम्बन्धेन देवदत्तस्यान्वयसम्भवेनानन्वयानापत्तेः।

अथोदकाभिन्नकर्तृका प्राप्तिरिति बोधोत्तरं तत्सम्बन्धिग्रामो लक्ष्यते इति चेन्न, प्राप्तेर्धात्वर्थतया क्तार्थकर्तारं प्रति विशेष्यताया असम्भवात्, `प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यम्' इति व्युत्पत्तेः। प्राप्तपदे प्राप्तेर्विशेष्यत्वे तस्या एव नामार्थत्वेनोदकेन सममभेदान्वयापत्तेश्च।

एवम् `ऊढरथः' `उपहृतपशुः' ` उद्धृतौदना' `बहुपाचिका' इत्यादावपि द्रष्टव्यम्। अत्र हि रथकर्मकवहनकर्त्ता, पशुकर्मकोपहरणोद्देश्यः, ओदनकर्म्मकोद्धरणावधिः, बहुपाककर्त्रधिकरणमिति बोधाभ्युपगमात्। अतिरिक्तवृत्तिपक्षे च घटत्वविशिष्टे घटपदस्येवोदककर्तृकप्राप्तिकर्मत्वविशिष्टे प्राप्तोदक इत्यादिसमुदायशक्तयैव निर्वाह इति भावः ।। 33 ।।
</5-3-6-1-2>
<5-3-6-1-3> अषष्ठ्यर्थबहुव्रीहौ व्युत्पत्त्यन्तरकल्पनागौरवम्
साधकान्तरमाह-
अषष्ठयर्थबहुव्रीहौ व्युत्पत्त्यन्तरकल्पना।
क्लृप्तत्यागश्चास्ति तव तत् किं शक्तिं न कल्पयेः ।। 34 ।।
<5-3-6-1-4> चित्रगुरित्यादिबहुव्रीहौ अन्यपदार्थे लक्षणायाः अनुपपत्तिप्रतिपादनम्

अयं भावः। चित्रगुरित्यादिषु चित्रगवीणां स्वाम्यादिप्रतीतिर्न विना शक्तिमुपपद्यते। नच तत्र लक्षणा। सा हि न चित्रपदे,'चित्रस्वामी गौः' इति बोधापत्तेः। नापि गोपदे, गोस्वामी चित्रः इत्यन्वयबोधापत्तेः। चित्रादिमात्रस्य लक्ष्यैकदेशत्वेन तत्र गवादेरन्वयायोगात्।

<5-3-6-1-4-1> गोपदे लक्षणानिराकरणम्
नच `चित्राभिन्ना गौः' इति शक्त्युपस्थाप्ययोरन्वयबोधोत्तरं तादृशगोस्वामी गोपदेन लक्ष्यते इति वाच्यम्, गोपदस्य, चित्रपदस्य वा विनिगमनाविरहेण लक्षकत्वासम्भवात्।

नच गोपदे साक्षात् सम्बन्ध एव विनिगमक इति वाच्यम्, एवमपि `प्राप्तोदकः' `कृतविश्वः' इत्याद्यषष्ठयर्थबहुव्रीहौ विनिगमकाप्राप्तेः। यौगिकानां कर्त्राद्यर्थकतया साक्षात्सम्बन्धाविशेषात्।
</5-3-6-1-4-1> गोपदे लक्षणानिराकरणम्
<5-3-6-1-4-2> पदद्वये लक्षणानिराकरणम्

नच `पदद्वये लक्षणा' इति नैयायिकोक्तं युक्तम्, बोधावृत्तिप्रसङ्गात्। नच परस्परं तात्पर्य्यग्राहकत्वादेकस्यैवैकदा लक्षणा' न द्वयोरिति न बोधावृत्तिरिति वाच्यम्, एवमपि विनिगमनाविरहतादवस्थ्येन लक्षणाया असम्भवात्।
</5-3-6-1-4-2>
<5-3-6-1-4-3> चरमपदे लक्षणानिराकरणम्
नच चरमपदे एव सा, प्रत्ययार्थान्वयानुरोधात्, प्रत्ययानां सन्निहितपदार्थगतस्वार्थबोधकत्वव्युत्पत्तेरिति वाच्यम्, एवं हि वहुव्रीह्यसम्भवापत्तेः। "अनेकमन्यपदार्थे" (पा० सू० 2-2-4)इत्यनेकसुबन्तानामन्यपदार्थप्रतिपादकत्वेन तद्विधानात्।

किञ्चैवं सति घटाऽऽदिपदेष्वपि चरमवर्ण एव वाचकताकल्पना स्यात्, पूर्वपूर्ववर्णानां तात्पर्य्यग्राहकत्वेनोपयोगसम्भवात्। एवं सति चरमवर्णमात्रश्रवणेऽर्थबोधापत्तिरिति चेद् अत्राप्युदकपदमात्रश्रवणादर्थप्रत्ययापत्तिस्तुल्येत्यन्यत्र विस्तरः।
</5-3-6-1-4-3>
</5-3-6-1-4>
एवञ्च, अषष्ठयर्थबहुव्रीहौ व्युत्पत्त्यन्तरकल्पना, उक्तयुक्ते, अगत्या शक्त्यन्तरकल्पनेत्यर्थः। क्लृप्तत्याग इत्यस्य क्लृप्तशक्तयोपपत्तिरिति व्युत्पत्तित्यागश्च तवास्ति। तत् किं सर्वत्र समासे शक्तिं न कल्पयेरिति वाक्यार्थः।

</5-3-6-1-3>
<5-3-6-1-5> नव्यनैयायिकमीमांसकयोः व्यपेक्षावादः
यत्तु व्यपेक्षावादिनो नैयायिक-मीमांसकादयः। न समासे शक्तिः, 'राजपुरुषः' इत्यादौ राजपदादेः
सम्बन्धिलक्षणयैव `राजसम्बन्ध्यभिन्नः पुरुषः' इति बोधोपपत्तेः।

अत एव राज्ञः पदार्थैकदेशतया न तत्र `शोभनस्य' इत्यादिविशेषणान्वयः। नवा घनश्यामः, `निष्कौशाम्बिः' `गोरथः' इत्यादौ इवादिप्रयोगापत्तिः, उक्तार्थतयैव क्रान्तादिपदप्रयोगासम्भवात्। न वा "विभाषा" (पा० सू० 2-7-11) इति सूत्रावश्यकत्वम्, लक्षणया `राजसम्बन्ध्यभिन्नः पुरुषः' इति बुबोधयिषायां समासस्य, राजसम्बन्धवानिति बुबोधयिषायां विग्रहस्येत्यादिप्रयोगनियमसम्भवात्। नापि पङ्कजपदप्रतिबन्दी शक्तिसाधिका, तत्रावयवशक्तिमजानतोऽपि बोधात्।

नच शक्तयग्रहे लक्षणया तेभ्यो विशिष्टार्थप्रत्ययः सम्भवति। अत एव राजादिपदशक्तयग्रहे `राजपुरुषः' `चित्रगुः' इत्यादौ न बोधः। नापि (नच) चित्रगुरित्यादौ लक्षणासंभवेऽप्यषष्ठयर्थबहुव्रीहौ लक्षणाया असम्भवः बहुव्युत्पत्तिभञ्जनापत्तेरिति वाच्यम्, `प्राप्तोदकः' इत्यादावुदकपदे एव लक्षणास्वीकारात्। पूर्वपदस्य यौगिकत्वेन तल्लक्षणाया धातुप्रत्ययतदर्थज्ञानसाध्यतया विलम्बितत्वात्, प्रत्ययानां सन्निहितपदार्थगतस्वार्थबोधकत्वव्युत्पत्त्यनुरोधाच्च।

घटादिपदे चातिरिक्ता शक्तिः कल्प्यमाना विशिष्टे कल्प्यते, विशिष्टस्यैव सङ्केतितत्वात्। बोधकत्वस्यापि प्रत्येकं वर्णेष्वसत्वात्। प्रकृते चात्यन्तसन्निधानेन प्रत्ययार्थान्वयसौलभ्यायोत्तरपदे एव सा कल्प्यत इति विशेषः।

स्वीकृतञ्च घटादिपदेष्वपि चरमवर्णास्यैव वाचकत्वं मीमांसकम्मन्यैरित्याहुः।

</5-3-6-1-5>
<5-3-6-1-6> नव्यनैयायिकमीमांसकयोः व्यपेक्षावादस्य खण्डनम्
<5-3-6-1-6-1>समासे शक्त्यस्वीकारे प्रातिपदिकत्वानापत्तिः

अत्रोच्यते-समासे शक्त्यस्वीकारे तस्य प्रातिपदिकसंज्ञादिकं न स्यात्, अर्थवत्त्वाभावात्, "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" (पा० सू० 1-2-45) इत्यस्याप्रवृत्तेः। नच "कृत्तद्धितसमासाश्च" (पा० सू० 1-2-46) इत्यत्र समासग्रहणात् सा, तस्य नियमार्थताया भाष्यसिद्धाया वैयाकरणभूषणे स्पष्टं प्रतिपादितत्वात्।

समासवाक्ये शक्त्यभावेन शक्यसम्बन्धरूपलक्षणाया अप्यसम्भवेन लाक्षणिकार्थवत्त्वस्याप्यसम्भवात्। अथ "तिप्तस्झि' इत्यारभ्य "ङ्योस्सुप्' इति तिप्प्रत्याहारो भाष्यसिद्धस्तमादाय "अतिप्प्रातिपदिकम्" इत्येव सूत्र्यताम्, कृतमर्थवदादिसूत्रद्वयेन। समासग्रहणञ्च

नियमार्थमस्तु। तथाच अतिप्=सुप्तिङन्तभिन्नं प्रातिपदिकमित्यर्थात् समासस्यापि सा स्यादिति चेत्तथापि प्रत्येकं वर्णेषु संज्ञावारणायार्थवत्त्वाऽऽवश्यकत्वेन समासाव्याप्तितादवस्थ्यमेव। तथाच प्रातिपदिकसंज्ञारूपं कार्यमेवार्थवत्त्बमनुमापयति-धूम इव वह्निम्।
</5-3-6-1-6-1>
<5-3-6-1-6-2>चित्रगुरित्यादिषु प्रत्ययार्थकर्मत्वाद्यनापत्तिः

किञ्चैवं `चित्रगुमानय' इत्यादौ कर्मत्वाद्यनन्बयापत्तिः, प्रत्ययानां प्रकृत्यर्थान्बितस्वार्थबोधजनकत्वव्युत्पत्तेः विशिष्टोत्तरमेव प्रत्ययोत्पत्तेर्विशिष्टस्यैव प्रकृतित्वात्। यत्तु सन्निहितपदार्थगतस्वार्थबोधकत्वव्युत्पत्तिरेव कल्प्यत इति, तन्न, `उपकुम्भम्' `अर्द्धपिप्पली' इत्यादौ पूर्वपदार्थे विभक्त्यर्थान्वयेन व्यभिचारात्।

नच तत्रापि सन्निधानमेव, आनुशासनिकसन्निधेर्विवक्षितत्वात्। तथाच यत्पदोत्तरं याऽनुशिष्टा सा तदर्थगतं
स्वार्थं बोधयति। समासे च समस्यमानपदोत्तरमेवानुशासनमिति वाच्यम्, अर्थवत्सूत्रेण विशिष्टस्यैव प्रातिपदिकत्वेन विशिष्टोत्तरं विभक्त्यनुशासनात्।
</5-3-6-1-6-2>

<5-3-6-1-6-3>प्रकृतित्त्वाश्रये विभक्त्यर्थान्वय इत्यस्यायुक्तत्वम्
अथ `प्रकृतित्वाश्रये विभक्त्यर्थान्वयः' इत्येव कल्प्यत इति चेत्तर्हि, `पङ्कजमानय' `दण्डिनं पश्य' `शूलिनं पूजय' इत्यादौ पङ्क-दण्ड-शूलेष्वानयन-दर्शन-पूजनादेरन्वयप्रसङ्गात्, `अघटमानय' इत्यत्र घटेऽप्यानयनान्वयापत्तेश्च। नच दण्डादीनां विशेषणतया न तत्रानयनाद्यन्वयः, `पाकान्नीलः' `धर्मात् सुखी' इत्यादौ पाक-धर्मादिहेतुताया रूप-सुखादावनन्वयप्रसङ्गात्। यच्च-प्रकृत्यर्थत्वं तज्जन्यज्ञानविषयत्वमात्रम्, तच्चात्राविरुद्धमिति, तन्न, `घटं पश्य' इत्यत्र घटपदात् समवायेनोपस्थिताकाशवारणाय वृत्या प्रकृत्यर्थत्वस्यावश्यकत्वात्।
</5-3-6-1-6-3>

<5-3-6-1-6-4>प्रत्ययप्राग्वर्तिपदजन्योपस्थितिविशेष्यत्वं प्रकृत्यर्थत्वमित्यस्य खण्डनम्
अथ `प्रत्ययप्राग्वर्त्तिपदजन्योपस्थितिविशेष्यत्वं प्रकृत्यर्थत्वम्' इति चेन्न, `गामानयति कृष्णो दण्डेन' इत्यत्र कृष्णे तृतीयार्थान्वयप्रसङ्गात्।
</5-3-6-1-6-4>
<5-3-6-1-6-5>समासोत्तरविभक्तेः समस्यमानपदार्थगतस्वार्थबोधकत्त्वकल्पनायां गौरवम्
अथ समस्यमानपदार्थगतस्वार्थबोधकत्वं समासोत्तरविभक्तेः कल्प्यत इति चेन्न, अक्लृप्तकल्पनां क्लृप्तव्युत्पत्तित्यागञ्चापेक्ष्य समुदायशक्तिकल्पनस्यैव युक्तत्वादिति दिक्।
</5-3-6-1-6-5>
<5-3-6-1-6-6>समासे विशिष्टशक्त्यस्वीकारे राजपुरुषादिषु अनन्वयप्रसङ्गः

अपिच समासे विशिष्टशक्त्यस्वीकारे `राजपुरुषः' `चित्रगुः' `नीलोत्पलम्' इत्यादौ सर्वत्रानन्वयप्रसङ्गः, राजपदादेः सम्बन्धिनि लक्षणायामपि, `तण्डुलः पचति' इत्यादौ कर्मत्वादिसंसर्गेण तण्डुलादेः पाकादावन्वयवारणाय प्रातिपदिकार्थप्रकारकबोधं प्रति विभक्तिजन्योपस्थितेर्हेतुताया आवश्यकत्वात्, पुरुषादेस्तथात्वाभावात्। `तण्डुलः शुभ्रः' इत्यादौ च प्रातिपदिकार्थकप्रथमार्थे तण्डुलादेः, तस्य च शुक्ले अभेदेनैवान्वयः।

`शुभ्रेण तण्डुलेन' इत्यादौ च विशेषणविभक्तिरभेदार्थिका, पार्ष्ठिको वाऽन्वय इति नातिप्रसङ्गः। तथाच समासे परस्परमन्वयासम्भवादावश्यिकैव समुदायस्य तादृशे विशिष्टार्थे शक्तिः।
</5-3-6-1-6-6>
<5-3-6-1-6-7>राजपुरुषादौ लक्षणा निरूपयितुमशक्या

किञ्च `राजपुरुषः' इत्यादौ सम्बन्धिनि, सम्बन्धे वा लक्षणा। नाद्यः, `राज्ञः पुरुषः' इति विवरणविरोधात्, समाससमानार्थकवाक्यस्यैव विग्रहत्वात्। अन्यथा तस्माच्छक्तिनिर्णयो न स्यात्। नान्त्यः `राजसम्बन्धरूपः पुरुषः' इति बोधप्रसङ्गात्। विरुद्धविभक्तिरहितप्रातिपदिकार्थयोरभेदान्वयव्युत्पत्तेरित्यादि प्रपञ्चितं वैयाकरणभूषणे।

अत एव "वषट्कर्त्तुः प्रथमभक्षः" इत्यत्र न भक्षमुद्दिश्य प्राथम्यविधानं युक्तम् एकप्रसरताभङ्गापत्तेरिति तृतीये, "त्र्यङ्गैः स्विष्टकृतं यजति" इत्यत्राङ्गानुवादेन त्रित्वविधानं न युक्तम्, एकप्रसरताभङ्गापत्तेरिति दशमे च
निरूपितं सङगच्छते, सङ्गच्छते चारुणाधिकरणारम्भः।
</5-3-6-1-6-7>
<5-3-6-1-6-8>विशिष्टशक्त्यस्वीकारे अरुणाधिकरणस्यैव असङ्गत्यापत्तिः

अन्यथा "अरुणया एकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति" इत्यत्रारुण्यपदवदितरयोरपि एकाब्दत्वादिगुणमात्रवाचकतया अमूर्त्तत्वात् क्रीणातौ करणत्वासम्भवस्य तुल्यत्वादारुण्यस्यैव वाक्याद् भेदशङ्काया असम्भवादिति प्रपञ्चितं भूषणे। तस्मात् समासशक्तिपक्षो जैमिनीयैरवश्याभ्युपेय इत्यास्तां विस्तरः ।। 35 ।।

</5-3-6-1-6-8>

</5-3-6-1-6>

</5-3-6-1>

</5-3-6>

</5-3>

<5-4> लौकिकविग्रहस्वरूपनिर्णयः

<5-4-1> मीमांसकमतनिरूपणम्

`राजपुरुषः' इत्यादौ राजा चासौ पुरुषश्चेत्येव विग्रहः। चित्रगुरित्यादौ चित्राणां गवामयमित्येव, समानार्थत्वानुरोधात्। यद्यपि प्रथमान्तानामेव बहुव्रीहिरिति "शेषो बहुव्रीहिः" (पा० सू० 2-2-23) इति सूत्राल्लभ्यते इति प्रथमान्तम्, पक्षे वाक्यम्-चित्रा गावो यस्येत्येवं सम्भवत्येव। "षष्ठी" (पा० सू० 2-2-8) इति समासविधानात् `राज्ञः पुरुषः' इति च पक्षे वाक्यम्। तथापि तस्य न विग्रहत्वम्, भिन्नार्थत्वात्, किन्तूक्तस्यैवेति मीमांसकाः।

</5-4-1>

<5-4-2> मीमांसकमतनिराकरणम्

तान् प्रसङ्गान्निरस्यति-

आख्यातं तद्धितकृतोर्यत्किञ्चिदुपदर्शकम्।
गुणप्रधानभावादौ तत्र दृष्टो विपर्ययः ।। 36 ।।

तद्धितकृतोर्यात्किञ्चिदर्थबोधकं विवरणमाख्यातम्, तत्र विपर्य्ययो दृष्टः। तथाहि-`आक्षिकः" "कुम्भकारः" इत्यत्राक्षकरणकव्यापाराश्रयः, कुम्भोत्पत्त्यनुकूलव्यापाराश्रय इति बोधः। `अक्षैर्दीव्यति' `कुम्भं करोति' इत्यत्राक्षकरणिका देवनानुकूला भावना, कुम्भोत्पत्त्यनुकूला भावनेति बोधः। कृत्प्रत्यये कारकाणाम्, आख्याते च भावनायाः प्राधान्यं वदतो मीमांसकस्यापि गुणप्रधानभावांशव्यत्यासो न विवरणत्वबाधक इति नात्र पाक्षिकस्य, `चित्रा गावो यस्य' इत्यादेर्विग्रहत्वे बाधकमस्तीति भावः ।। 36 ।।

</5-4-2>

</5-4>

<5-5>विशिष्टशक्तिस्वीकारे निषादस्थपत्यधिकरणविरोधशङ्का

नन्वस्तूक्तरीत्या सर्वत्र समासे शक्तिः, `अस्तु च तथाविग्रहस्तथापि षष्ठीतत्पुरुष-कर्मधारययोः शक्तिमत्त्वाविशेषान्निषादस्थपत्यधिकरणसिद्धान्तसिद्धिर्न स्यादित्यत आह--

</5-5>विशिष्टशक्तिस्वीकारे निषादस्थपत्यधिकरणविरोधशङ्का

<5-6>विशिष्टशक्तिस्वीकारे निषादस्थपत्यधिकरणविरोधशङ्कापरिहारः

पर्यवस्यच्छाब्दबोधाविदूरप्राक्क्षणस्थितेः।
शक्तिग्रहेऽन्तरङ्गत्वबहिरङ्गत्वचिन्तनम् ।। 37 ।।

पर्य्यवस्यंश्चासौ शाब्दबोधश्च तस्मादविदूरश्चासौ प्राक्क्षणश्च तदानीन्तनलाघवमादायाधिकरणाविरोध इत्यर्थः। अयं भावः-निषादस्थपतिपदस्य समासशक्तिपक्षे, निषादरूपे, निषादानाञ्च स्थपतौ, निषादस्वामिके पुरुषान्तरे चेत्येवं सर्वत्र शक्तत्वान्नानार्थत्वम्। तथाच "नानार्थे तात्पर्याद् विशेषावगतिः" इति न्यायेन तत्कल्पनायां पदद्वयेन पूर्वोपस्थितार्थे एवोपस्थित्यादिलाघवात् तत् कल्प्यत इति। परेषामपि सति तात्पर्य्ये `यष्टीः प्रवेशय' इतिवल्लक्षणाया दुर्वारत्वात्, तात्पर्य्यमेव कल्प्यकोटाववशिष्यत इति दिक् ।। 36 ।।

</5-6>

इति वैयाकरणभूषणसारे समासशक्तिनिरूपणम् ।। 5 ।।

</5-0>

# वैयाकरणभूषणसारः/शक्तिनिर्णयः (कारिका ३७-३९)

https://sa.wikisource.org/s/paq
< वैयाकरणभूषणसारः
<6-0>
।। अथ शक्तिनिर्णयः।।
<6-1> शक्तिस्वरूपम्
शक्तिप्रसङ्गात् तस्याः स्वरूपमाह--

इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा।
अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा ।। 37 ।।

इन्द्रियाणाम्=चक्षुरादीनां स्वविषयेषु=चाक्षुषेषु घटादिषु यथाऽनादिर्योग्यता=तदीयचाक्षुषादिकारणता, तथा शब्दानामपि अर्थैः सह तद्बोधकारणतैव योग्यता, सैव शक्तिरित्यर्थः।
<6-1-1> सङ्केतस्य बोधकारणत्वनिरासः
ननु न बोधकारणत्वमनादिभूतं शक्तिः, आधुनिकदेवदत्तादिपदे तदभावात्।
अन्यथा पित्रादीनां सङ्केताज्ञानेऽप्यन्वयबोधप्रसङ्गः, लाक्षणिकेऽतिव्याप्तिश्चे-ति सङ्केतज्ञानमपि हेतुर्वाच्यम्। तथाचावश्यकत्वात् स एव शक्तिरस्तु।

स चाधुनिके पित्रादेः, गवादौ चेश्वरस्य चेति चेत्, अत्रोच्यते-सङ्केतो न स्वरूपेण हेतुः, अगृहीतशक्तिकादर्थबोधप्रसङ्गात्।

नापि सामान्यतो ज्ञातः, प्रमेयत्वादिना तज्ज्ञानेऽपि बोधप्रसङ्गात्। नाऽपि सङ्केतत्वेन तज्ज्ञानं हेतुः, गवादिपदेष्वपीश्वरादेः सङ्केतत्वेन तज्ज्ञानशून्यानां लौकिकमीमांसकादीनां तत्तदर्थबोधजनकत्वग्रहवतामेव बोधोदयेन व्यभिचारात्। नचार्थधीजनकतावच्छेदकत्वेन तज्ज्ञानं तथा, ततोऽपि लाघवेनार्थधीजनकत्वेनैव हेतुतायामस्मत्पक्षसिद्धेः। नचाधुनिकदेवदत्तादौ सङ्केतज्ञानादेव बोधेनास्य व्यभिचारः, तत्रापि "इदम्पदम् एनमर्थं बोधयतु" इतीच्छाग्रहे पदे तदर्थबोधकत्वस्यावगाहनेन व्यभिचाराभावात्।

नच स्वातन्त्र्येणार्थबोधकताज्ञानं कारणं बाच्यम्। अन्यथा `नेदं तद्धीजनकम्' इति ज्ञानवतः `अस्माच्छब्दादयमर्थो बुद्धोऽनेन' इति जानतस्तद्ग्रहापत्तेरिति वाच्यम्, नेदं तद्धीजनकमिति ग्रहवतो बोधेन पदे
परग्रहं जानतोऽपि तद्ग्रहासम्भवात्। अन्यथा भ्रान्तिज्ञस्यापि भ्रान्तत्वापत्तेरिति।
इदञ्चार्थधीजनकत्वं पित्रादिसङ्गेतज्ञानादेव गृह्यते, अतस्तज्ज्ञानात् पूर्वं न बोधः।
</6-1-1>
<6-1-2> लक्षणा पृथक् नास्ति
नापि लाक्षणिकोच्छेदापत्तिः, इष्टत्वात्, शक्तिग्राहकव्यवहारस्य मुख्य-लक्ष्यसाधारण्यात्।
किञ्च प्रत्यक्षादिजन्योपस्थितेः शाब्दबोधानङ्गत्वाच्छाब्दबोधं प्रति शक्तितजन्योपस्थितेः, लक्षणाजन्योपस्थितेश्च कारणत्वं वाच्यम्, तथाच कार्य्यकारणभावद्वयकल्पने गौरवं स्यात्। अस्माकं पुनः शक्तिजन्योपस्थितित्वेनैव हेतुतेति लाघवम्।

अपिच लक्षणावृत्तिस्वीकारे कार्यकारणभावस्य प्रत्येकं व्यभिचारः, शक्तितजन्योपस्थितिं विनाऽपि लक्षणाजन्योपस्थितितः शाब्दबोधात्। नचाव्यवहितोत्तरत्वसम्बन्धेन तत्तदुपस्थितिमत्त्वं कार्य्यतावच्छेदकम्, तत्तदुपस्थितित्वञ्च कारणतावच्छेदकम्, अनन्तकार्य्यकारणभावप्रसङ्गात्। किञ्च पदार्थोपस्थितिं प्रत्यपि शक्तिज्ञानत्वेन, लक्षणाज्ञानत्वेन च हेतुतेति व्यभिचारः, गौरवञ्च प्राग्वदेव द्रष्टव्यम्।
<6-1-3> अनन्तकार्यकारणभावकल्पनागौरवम् समेषां समानम्
नच `इदं पदमेतदर्थबोधकम्' इति शक्तिज्ञानेन कार्य्यकारणभावकल्पनेऽपि तत्तदर्थभेदेनानेककार्य्यकारणभावकल्पने गौरवं तवापि समानम्, परस्परव्यभिचारवारणायाव्यवहितोत्तरत्वघटितत्वे च सुतरामिति वाच्यम्, शक्तिभ्रमानुरोधेन तत्तत्पदतत्तदर्थभेदेन कार्य्यकारणभावानन्त्यस्य तवापि साम्यात्। लक्षणाकार्य्यकारणभावकल्पनागौरवं परं तवातिरिच्यते।
</6-1-3>
<6-1-4> वृत्तिजन्योपस्थितित्वेन शाब्दबोधहेतुतायामपि गौरवम्
अथ वृत्तिजन्योपस्थितित्वेनैव शाब्दबोधहेतुता, वृत्तिज्ञानत्वेन च पदार्थोपस्थितिकारणतेत्येवं मया वाच्यमिति चेन्न, शक्ति-लक्षणान्यतरत्वस्य, शाब्दबोधहेतुपदार्थोपस्थित्यनुकूलपदपदार्थसम्बन्धत्वस्य वा वृत्तित्वस्य कारणतावच्छेदकत्वाच्छक्तित्वमपेक्ष्य गुरुत्वात्,

शाब्दबोधहेतुताऽवच्छेदकपदार्थोपस्थितिहेतुवृत्तेरज्ञाने तद्घटितकार्य्यकारणभावग्रहस्याप्यसम्भवात्।
</6-1-3>
<6-1-4>शक्तिज्ञानत्वेनैव शक्तिलक्षणे प्रति हेतुत्वस्यापि असङ्गतत्वम्

अथ ममापि शक्तिज्ञानत्वेनैव हेतुता, शक्यसम्बन्धज्ञानरूपलक्षणायां शक्तेरपि प्रवेशात्, इति चेन्न, शक्तिज्ञान-पदार्थोपस्थित्योः कार्य्यकारणभावे समानविषयत्वस्यावश्यकत्वात्। अन्यथा गङ्गा-तीरयोः सम्बन्धाग्रहवतो गङ्गापदशक्तिं जानतोऽपि `गङ्गायां घोषः' इति वाक्यात्तीरबोधप्रसङ्गः, शक्तिज्ञानस्य हेतोः सत्त्वात्। अपिच `घटमानय' इति वाक्यम्, हस्तिनञ्च स्मरतः, घटपदादिभ्यो घटादेः, गजाद्धस्तिपकस्य च समूहालम्बनस्मरणवतो घटानयनवद्धस्तिपकस्यापि शाब्दबोधापत्तिः, समूहालम्बनरूपायां पदार्थोपस्थितौ वृत्ति(पद) जन्यत्वसत्त्वात्।

तथाच `विषयतया शाब्दबोधं प्रति तदंशविषयकवृत्तिजन्योपस्थितिर्हेतुः' इति वाच्यम्, एवञ्च लक्षणाया अपि शक्तितज्ञानत्वेन हेतुत्वमसम्भवदुक्तिकमिति।
</6-1-4>
एतेन शक्तितप्रयोज्यैवोपस्थितिर्हेतुरिति न लक्षणाज्ञाने कार्य्यकारणभावान्तरं ममापीति परास्तम्, प्रयोज्यत्वस्यानतिप्रसक्तस्य दुर्वचत्वाच्चेत्यादि विस्तरेण प्रपञ्चितं भूषणे ।। 37 ।।
</6-1-2>
<6-2> अपभ्रंशेषु शक्तिसाधनम्
नन्वेवं भाषादितो बोधदर्शनाद् बोधकतरूपा शक्तिस्तत्रापि स्यात्। तथाच साधुताऽपि स्यात्, शक्तत्वस्यैव साधुताया व्याकरणाधिकरणे प्रतिपादनादित्याशङ्कां द्विधा समाधत्ते-
<6-2-1>साधुस्मरणाद्बोध इति मतोपपादनम्
असाधुरनुमानेन वाचकः कैश्चिदिष्यते।
वाचकत्वाविशेषे वा नियमः पुण्यपापयोः ।। 38 ।।

असाधुः=गाव्यादिः, अनुमानेन=साधुशब्दमनुमाय, वाचकः=बोधकः कैश्चिदिष्यते। तथाच लिपिवत्तेषां साधुस्मरणे एवोपयोगः, नतु साक्षात्तद्वाचकत्वम्, अतो न साधुत्वमिति भावः। उक्तं हि वाक्यपदीये-

ते साधुष्वनुमानेन प्रत्ययोत्पत्तिहेतवः।
तादात्म्यमुपगम्येव शब्दार्थस्य प्रकाशकाः।।
न शिष्टैरनुगम्यन्ते पर्य्याया इव साधवः।
ते (न) यतः स्मृतिशास्त्रेण तस्मात् साक्षादवाचकाः।।
बम्बम्बेति यदा बालः शिक्ष्यमाणः प्रभाषते।
अव्यक्तं तद्विदां तेन व्यक्ते भवति निर्णयः।।
एवं साधौ प्रयोक्तव्ये योऽपभ्रंशः प्रयुज्यते।
तेन साधुव्यवहितः कश्चिदर्थोऽभिधीयते ।। इति ।।
<6-2-2> अपभ्रंशानाम् साक्षादवाचकत्वे प्रमाणम्
नन्वपभ्रंशानां साक्षादवाचकत्वे किं मानम्,? शक्तिकल्पकव्यवहारादेस्तुल्यत्वात्, इति चेत् सत्यम्, तत्तद्देशभेदेन भिन्नेषु तेषु तेषु शक्तिकल्पने गौरवात्। नच पर्य्यायतुल्यता शङ्क्या, तेषां सर्वदेशेष्वेकत्वात्, विनिगमनाविरहेण सर्वत्र शक्तिकल्पना, नहि अपभ्रंशे तथा, अन्यथा भाषाणां पर्यायतया गणनापत्तेश्च। एवञ्च `शक्तत्वमेवास्तु साधुत्बम्' इति नैयायिकमीमांसकादीनां मतं तन्मतेनैव द्रष्टव्यम्।
</6-2-2>
</6-2-1>
<6-2-3> अपभ्रंशेष्वपि शक्तिसाधनम्-स्वमतोपस्थापनम्
इदानीं स्वमतमाह-वाचकत्वाविशेषे वेति। अयं भावः-अपभ्रंशानामशक्तत्वे ततो बोध एव न स्यात्। नच साधुस्मरणात् ततो बोधः, तानविदुषां पामराणामपि बोधात्, तेषां साधोरबोधाच्च। नच शक्तिभ्रमात् तेभ्यो बोधः, बोधकत्वस्याबाधेन तद्ग्रहस्याभ्रमत्वात्। `ईश्वरेच्छा शक्तिः' इति मतेऽपि सन्मात्रविषयिण्यास्तस्या बाधाभावात्, शक्तेः पदपदार्थविशेषघटिताया भ्रमासम्भवाच्चेति।

उक्तञ्च वाक्यपदीये-

पारम्पर्यादपभ्रंशा विगुणेष्वभिधातृषु।
प्रसिद्धिमागता येषु तेषां साधुरवाचकः।।

दैवी वाग् व्यवकीर्णेयमशक्तैरभिधातृभिः।
अनित्यदर्शिनां त्वस्मिन् वादे बुद्धिविपर्य्ययः ।। इति ।।

अवाचकः=अबोधकः, बुद्धिविपर्य्ययः=एते एव वाचका नान्ये इति विपर्य्यय इत्यर्थः। किञ्च विनिगमनाविरहाद् भाषायामपि शक्तिः। नच तासां नानात्वं दोषः, संस्कृतवन्महाराष्ट्रादिभाषायाः सर्वत्रैकत्वेन
प्रत्येकं विनिगमनाविरहतदवस्थ्यात्।

किञ्चानुपूर्वी पदेऽवच्छेदिका। सा च पर्य्यायेष्विव भाषायामप्यन्यान्यैवेति कस्तयोर्विशेष इति विभाव्यं सूरिभिः। तथाच संस्कृतवद् भाषायाः सर्वत्रैकत्वेन प्रत्येकं शब्दाः शक्ता एव। नच पर्य्यायतया भाषाणां गणनाऽऽपत्तिः, साधूनामेव कोशादौ विभागाभिधानात्।
<6-2-4>अपभ्रंशानां वाचकत्वेपि असाधुत्वप्रतिपादनम्
नन्वेवं साधुता तेषां स्यादित्यत आह-नियम इति-पुण्यजननबोधनाय साधूनाम्, "साधुभिर्भाषितव्यम्" इति विधिः। पापजननबोधनाय "नासाधुभिः" इति निषेधः। तथाच पुण्यजननयोग्यत्वं साधुत्वम्। पापजननयोग्यत्वमसाधुत्वम्। तत्र जनकताऽवच्छेदिका च जातिः। तज्ज्ञापकञ्च कोशादि, व्याकरणादि च।

एवमेव च राजसूयादेर्ब्राह्मणे फलाजनकत्ववद् गवादिशब्दानां नाश्वादौ साधुत्वमिति सङ्गच्छते।
</6-2-4>
<6-2-5>व्याकरणव्युत्पादितत्वं साधुत्वम्
आधुनिकदेवदत्तादिनाम्नामपि "द्व्यक्षरम्" इत्यादिभाष्येण व्युत्पादितत्वात् साधुत्वम्। एवञ्च यः शब्दो यत्रार्थे व्याकरणे व्युत्पादितः स तत्र साधुरिति पर्यवसितम्।

गौणानां गुणे व्युत्पादनात् तत्पुरस्कारेण प्रवृत्तौ साधुत्वमेव। आधुनिकलाक्षणिकानां त्वसाधुत्वमिष्टमेव। अत एव `ब्राह्मणाय देहि' इत्यर्थे `ब्राह्मणं देहि' इत्यादिकं लक्षणयाऽपि न साधुरित्यादि विस्तरेण प्रपञ्चितं भूषणे ।। 38 ।।
</6-2-5>
</6-2>
<6-3> अतिरिक्तशक्तिग्रहोपायः
अतिरिक्तशक्तिग्रहोपायमाह-

सम्बन्धिशब्दे सम्बन्धो योग्यतां प्रति योग्यता।।
समयाद् योग्यतासंविन्मातापुत्रादियोगवत् ।। 39 ।।

सम्बन्धो विषयः। योग्यतां प्रति योग्यता-सम्बन्धिशब्दं प्रति योग्यता विषय इति। समयात्-व्यवहारात्, योग्यतासंवित्-शक्तिग्रहः। घटपदमत्र योग्यमेतत्सम्बन्धीति व्यवहारात्, सा ग्राह्येत्यर्थः ।। 39 ।।
</6-3>

इति वैयाकरणभूषणसारे शक्तिनिर्णयः ।। 6 ।।

# वैयाकरणभूषणसारः/नञर्थनिर्णयः (कारिका ४०-४१)

https://sa.wikisource.org/s/par
< वैयाकरणभूषणसारः
अथ नञर्थनिर्णयः।
<7-1> आरोपितत्वं नञ्द्योत्यम्

नञर्थमाह-

नञ्समासे चापरस्य प्राधान्यात् सर्वनामता ।।
आरोपितत्वं नञ्द्योत्यं न ह्यसोऽप्यतिसर्ववत् ।। 40 ।।

नञ्समासे अपरस्य=उत्तरपदार्थस्य प्राधान्यात् सर्वनामता सिद्ध्यतीति शेषः। अत एव आरोपितत्वमेव, नञ्द्योत्यमिति--अभ्युपेयमिति शेषः।

अयं भावः-`असर्वः' इत्यादौ `आरोपितः सर्वः' इत्यर्थे सर्वशब्दस्य प्राधान्याबाधात् सर्वनामता सिद्धयति। अन्यथा `अतिसर्वः' इत्यत्रेव सा न स्यात्, `घटो नास्ति' इत्यादावभावविषयकबोधे तस्य विशेष्यताया एव दर्शनात्। अस्मद्रीत्या च स आर्थो बोधो मानसः।

तथाच `असर्वस्मै इत्याद्यसिद्धिप्रसङ्गो नेति। अत्र चारोपितत्वम्-आरोपविषयत्वम्। आरोपमात्रमर्थो विषयत्वं संसर्ग इति निष्कर्षः। द्योत्यत्वोक्तिर्निपातानां द्योतकत्वमभिप्रेत्य ।। 40 ।।
</7-1>
<7-2> अभावः नञर्थ इति पक्षान्तरोपपादनम्
`घटो नास्ति' `अब्राह्मणः इत्यादावारोपबोधस्य सर्वानुभवविरुद्धत्वात् पक्षान्तरमाह-

अभावो वा तदर्थोऽस्तु भाष्यस्य हि तदाशयात्।
विशेषणं विशेष्यो वा न्यायतस्त्ववधार्य्यताम् ।। 41 ।।

तदर्थः=नञर्थः अर्थपदं द्योत्यत्व-वाच्यत्वपक्षयोः साधारण्येन कीर्त्तनाय।
<7-2-1> अभावः नञर्थ इति पक्षे भाष्यप्रामाण्यम्
भाष्यस्येति-तथाच नञ्सूत्रे महाभाष्यम्-"निवृत्तपदार्थकः" इति, निवृत्तं पदार्थो यस्य "नपुंसके भावे क्तः" (पा० सू० 3-1-114) इति क्तः। अभावार्थक इत्यर्थः।

यत्तु-निवृत्तः पदार्थो यस्मिन्नित्यर्थः। सादृश्यादिनाऽध्यारोपितब्राह्मण्याः क्षत्रियादयोऽर्था यस्येत्यर्थ इति कैयटः, तन्न, अध्यारोपितब्राह्मण्यस्य क्षत्रियादेर्नञवाच्यत्वात्।

अन्यथा सादृश्यादेरपि वाच्यतापत्तेः।
<7-2-2> सादृश्यादीनाम् नञर्थत्वाभावप्रतिपादनम्
यत्तु-
तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः।।

इति पठित्वा अब्राह्मणः, अपापम्, अनश्वः, अनुदरा कन्या, अपशवो वा अन्ये गोऽश्वेभ्यः, अधर्म इत्युदाहरन्ति। तत्त्वार्थिकार्थमभिप्रेत्येति स्पष्टमन्यत्र।
</7-2-2>

विशेषणमिति-प्रतियोगिनीति शेषः। तथाचासर्वापदे सर्वनामता। "अनेकमन्यपदार्थे" "सेव्यतेऽनेकया सन्नतापाङ्गया" इत्यादावेकशब्दार्थप्राधान्यादेकवचननियमः। `अब्राह्मणः इत्यादावुत्तरपदार्थप्राधान्यात् तत्पुरुषत्वम्। `अत्वं भवसि' `अनहं भवामि' इत्यादौ पुरुषवचनादिव्यवस्था चोपपद्यते।

